द्यङ्गानां प्रवृत्त्या क्रमनियमः । कुतस्तदुपक्रमात् तेन प्रधानेनाङ्गानामुपक्रमात् तदेकप्रयोगत्वादित्यर्थः । सप्तदश यागाङ्गानि सह प्रयोज्यानि प्रथमाङ्गानुष्ठाने सति द्वितीयादौ षोडशभिर्व्यवधानमभ्यनुजानन्ति न ततोऽधिकम् । प्रावृत्तिकक्रमाश्रयणे च सप्तदशसु प्रथमाङ्गानुष्ठाने द्वितीयो धर्मः प्रथमादिपशुषु क्रियमाणः षोडशभिरेव व्यवधीयते । क्रमान्तराश्रयणे ऽधिकैरपि व्यवधानं स्यात् । अतः प्रयोगवचनकोपपरिहाराय प्रवृत्त्या नियम इति ।

शेषाणां शेषिणां च क्रमापेक्षायां हेतुमाह **युगपदिति** । युगपद- ४८ , १८ नुष्ठानप्राप्तौ क्रमः स्यात्तदेव कुतस्तत्राह **एकपौर्णमास्यामिति** । पर्वणो मध्ये त्रयः पौर्णमास्याः सद्यस्त्रयो ऽमावास्यायाः । कालैक्ये ऽपि यदि कर्तृभेदः स्यात् तदा न क्रमोऽपेक्ष्येत तन्मा भूदित्याह **एकाधिकारीति** । स्वामित्वेनाधिकारित्वं तस्यैवानुष्ठातृत्वेन कर्तृत्वम् । एकाधिकारिकर्तृकत्वे हेतुमाह **एकप्रयोगवचनेनेति** । यजेतेत्याख्याते कर्त्रैक्यस्य विवक्षितत्वात्प्रयोगवचने कर्त्रैक्यं सिद्धम् । एकप्रयोगवचनपरिग्रहे हेतुमाह **एकफलवदिति** । एकाश्चामी फलवन्तः प्रधानस्य उपकारश्च तस्मिन् समुच्चित्य साधनत्वेन उपनिबद्धाः शेषाः एकेन फलेनावच्छिन्नाः शेषिणो ऽत एकप्रयोगवचनोपगृहीता इति ।

**सौर्यार्यमणेति** । एकादशे* [स्थितम्–अङ्गवत् क्रतूनामानुपूर्व्यम्†] । ,, । ८१ सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः आर्यमणं चरुं‡ निर्वपेत्स्वर्गकामः प्राजापत्यं चरुं निर्वपेच्छतकृष्णलमायुष्कामः इत्यादिषु क्रमपठितक्रतुषु चिन्ता§ किं पाठक्रमेण प्रयोज्या उताऽनियमेनेति । तत्र यथाऽङ्गानां समिदादीनामेकेन युगपत्करणाशक्तेः क्रमाकाङ्क्षायां पाठात् क्रमनियमः एवं क्रतूनामपीति प्राप्ते राद्धान्तः । न वाऽसंबन्धात्‖ । अङ्गेष्वेकप्रयोगवचनपरिग्रहादस्ति क्रमाकाङ्क्षा क्रतुषु नानाफलेषु नैकः प्रयोगवचनोऽस्ति न च सर्वे मिलित्वा प्रयोजयन्ति तेनैषामेकप्रयोगवचनसंबन्धाभावान्नास्ति क्रमाकाङ्क्षा किं तु पुरुषस्य । न च तदाकाङ्क्षितं विधिप्रतिपाद्यमिति तदिच्छयैव क्रमः पाठक्रम-

* पञ्चमे इति वक्तव्ये एकादशे इत्ययं लेखः पारम्परिकलेखकभ्रममूलक इति प्रतिभाति । सर्वेषु पुस्तकेषु पाठ एवमेवोपलभ्यते ।

† जैमिनिसू० अ० ५ पा० ३ सू० ३२ । ‡ आर्यमणं चरुमिति ८–४ पु० पा० ।

§ पठितेषु चिन्तेति ३ पु० पा० । ‖ जै० सू० अ० ५ पा० ३ सू० ३३ ।

स्त्वध्ययनार्थ इति । युगपत्पाठासम्भवेनावर्जनीयतया पाठक्रमस्यागतत्वा-त्तन्नियमस्य चाध्ययनार्थत्वादित्यर्थः ।

गोदोहनस्य पुरुषार्थत्वं चतुर्थे चिन्तितम्—यस्मिन्प्रीतिः पुरुषस्य तस्य लिप्सा ऽर्थलक्षणा ऽविभक्तत्वात्[१] । दर्शपूर्णमासयोर्गोदोहनेन पशुका-मस्य प्रणयेदिति श्रूयते । तत्र गोदोहने क्रत्वर्थत्वपुरुषार्थत्वसंदेहे पशु-कामस्येति समभिव्याहाराद्वाक्येन क्रतूपकारकत्वेन[२] चोभयार्थमिति प्राप्ते सिद्धान्तः । नोपकारकत्वं शेषत्वं किं तु तादर्थ्यम् । तथा च गोदोहनस्य पशुशेषत्वान्न क्रत्वङ्गत्वम् । अङ्गापेक्षा च क्रतोरुपकारायान्यार्थस्यापि क्रतूप-कारकत्वमविरुद्धम् । तेन वाक्यात्पुरुषार्थमेवेति । यस्मिन्निर्वृत्ते पुंसः प्रीतिः फलं भवति तस्य लिप्सा फलप्रयुक्ता न विधितः । कुतस्तस्य फल-साधनस्य प्रीत्या विभागाभावादिति सूत्रार्थः ।

अस्य चाप्रणयनाश्रितत्वात्क्रम एव क्रम इति गोदोहनस्य प्रण-

४९ । ८ यनाश्रितत्वमुपपादयति **नो खल्वपीति** । कल्प्यतां तर्हि व्यापारविशेषस्तत्राह **प्रणयनाश्रितामिति** । प्रणयनाश्रितविशिष्टविधिमाशङ्क्य प्रणयनेत्युक्तम् । संनिहितत्वानेन विशिष्टविधिरित्यर्थः । सामर्थ्यरूपाद् लिङ्गात्प्रणयनाश्रि-तत्वमाह **सामर्थ्याच्चेति** ।

११ । ३ **यथा वा दर्शपूर्णमासाभ्यामिति**[३] । चतुर्थे चिन्तितम्—उत्पत्तिकालाद्विषये कालः स्याद्वाक्यस्य तत्प्रधानत्वात्[४] । दर्शपूर्णमासा-भ्यामिष्ट्वा सोमेन यजेतेति श्रूयते । तत्र संदेहः किमिदमङ्गस्य विधायकमुत कालस्येति । तत्र वाक्यतेरङ्गस्य तन्त्राङ्गत्व यजेतेति विधिप्रत्यासत्तेः सोम-स्यव । ननु द्रव्यद्वारेणान्यत्र विहितसोमयागस्य प्रत्यभिज्ञानात्कथं तद्विधिः । उच्यते । तत्कार्यस्येहाप्रत्यभिज्ञानाद्वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेतिवत् । न ह्यत्र ब्रह्मवर्चसं बृहस्पतिसवकार्यं प्रतीतम् अतो ऽङ्गं बृहस्पतिसवो वाज-पेयस्य । तथ च सोमयागो ऽपि दर्शपूर्णमासेष्टिं प्रत्यङ्गत्वेन विधीयत इति

१ जै. सू. अ. ४ पा. १ सू. २ । २ क्वचिन पुरुषार्थत्वेन क्रतूपकारकत्वेनेति ३ पु. पा. ।
३ दर्शपूर्णमासाभ्यामिति भामती मु. पु. पाठः । तत्त्वतस्तु दर्शपूर्णमासाभ्यामित्यत्र नो खल्वि-त्यादीति तत्पदार्थानां पा. । भामतीग्रन्थानुसारात् स्थापितमस्मिन् ।
४ जै. सू. अ. ४ पा. ३ सू. ३७ । यथा दर्शेत्यादिपाठः १ पु. ।

तया ज्ञानफलमेव तत्फलमित्यर्थः । फलभेदे वक्तव्ये कारणभेदकथनं भाष्ये

४९ । २४ अनुपयोगीत्याशङ्क्याह **न केवलमिति** । विधेयाविधेयक्रियाज्ञानफलयोः

रुत्पाद्यता व्यङ्ग्यता च भेद इत्यर्थः । अनुष्ठानान्तरेत्यत्रान्तरशब्दार्थमाह

**शाब्दज्ञानेति*** । क्वचिद् ब्रह्मविदाप्नोति परमित्यादौ ज्ञानफलं साध्यत्वेन

प्रतीतमपि न्यायबलाद्वचनान्तरवशाच्चाभिव्यक्तिपरत्वेन व्याख्याय फलभेद

उक्तो जिज्ञास्यभेदस्तु प्रतीतिसमयएव स्फुट इत्याह **जिज्ञास्यभेद-**

**मिति** । ननु भवतेरकर्मकत्वाद्भावार्थत्वे च नपुंसकत्वप्रसङ्गाद्भव्यशब्देन

कथं जिज्ञास्यविषय†भेदसिद्धिरत आह **भवितेति** ।

ननु तयोरेव कृत्यक्तखलर्था इति कृत्यानां भावकर्मणोः स्मरणादचो

यदिति सूत्रविहितयत्प्रत्ययान्तस्य भव्यशब्दस्य कर्तृवाचित्वमयुक्तमित्याश-

५० । ४ ङ्क्याह **कर्त्तरि कृत्य इति** । भव्यगेयेत्यादिना हि सूत्रेण भावकर्मवाचिता-

नियममपोद्य कृत्यप्रत्ययान्ता एव भव्यादिशब्दा विकल्पेन कर्तरि निपा-

त्यन्ते । अतो भवतीति व्युत्पत्त्या भव्यशब्दः कर्तृवाची । पक्षे च भा-

वकर्मणोः । अस्य च भवतेरनुपसर्गत्वात्प्राप्तिवाचित्वाभावाच्च कर्माप्राप्तिः ।

भावे तु भव्यमनेनेति स्याद् नेह सः । पुँल्लिङ्गनिर्देशात् उत्पाद्यधर्मा-

पेक्षणाच्च । अतः कर्त्तरि कृत्य इति । ननु भवितुः कथं ज्ञानकाले सत्त्वाभाव

इत्याशङ्क्य ज्ञानोत्तरभाविप्रयोजकव्यापारापेक्षणादित्याह **भविता चेति** ।

भवतिर्ह्यसिद्धकर्तृकक्रियावाची न पच्यादिवत् सिद्धकर्तृकक्रियस्ततो भविता

स्वतो ऽसिद्धः सन् भावकव्यापारापेक्षनिष्पत्तिरर्थात् साध्यो भातीति । अत

एवाहुः ।

करोत्यर्थस्य यः कर्ता भवितुः स प्रयोजकः ।

भविता तमपेक्ष्याथ प्रयोज्यत्वं प्रपद्यते ॥ इति ।

भाष्ये भूतशब्दस्यातीतवाचित्वभ्रमं निरस्यति **भूतमिति** । नन्वा-

,, । १० ज्ञाभ्यर्थनानुज्ञानां लोके चोदनात्वात् कथं वेदे चोदना ऽत आह **आज्ञा-**

**दीनामिति** । उत्कृष्टपुंसः स्वाभिलषितोपायकार्यत्वाभिधानमाज्ञा । यथा

* शब्दज्ञानेनेतीति १ पु० पा० । मूले ऽपि पाठद्वैविध्यं दृश्यते ।

† जिज्ञास्यविषयभेद इति ३ पु० पा० । ‡ विषयशब्दो नास्ति २-३ पु० ।

गामानयेति । एतदेव हीनस्याभ्यर्थना यथा माणवकमध्यापयेति । प्रवृत्तस्य प्रयोज्यस्य तद्धितोपायोक्तिरनुज्ञा । तथा कुरु यथा हितमिति । नैतासां सम्भवो वेदे इत्युपदेशश्चोदना । उपदेशो ह्यप्रवृत्तनियोज्यस्य प्रयोजनोपायबोधको लोके ऽवगतो यथा गोपालवर्त्मनि सुपथकथनपरो ऽनेन पथा याहीति । न हीहाज्ञा प्रयोक्तुर्निकर्षात् । नाभ्यर्थना स्वप्रयोजनाभावात् । नाप्यनुज्ञा प्रयोज्यस्याप्रवृत्तत्वात् तदिह नियोज्यस्याप्रवृत्तस्य हितोपायकथनत्वेनोक्तिरपौरुषेये ऽपि वेदे भवत्येवेति । तस्य धर्मस्य ज्ञायते ऽनेनेति ज्ञानं प्रमाणमुपदेशो विधिरिति जैमिनीयसूत्रावयवार्थः । स्वविषयइति भाष्ये स्वशब्देन चोदनाऽभिधीयतइति मत्वा ऽऽह । **स्वसाध्ये इति** । स्वस्याः प्रतिपाद्ये विषये भावनायामित्यर्थः । धर्मस्येत्युक्त्या भावनोपसर्जनभूतो ऽपि शब्दतो ऽर्थतः प्राधान्यात् स्वशब्दार्थ इति गृहीत्वा ऽऽह **तद्विषये इति** । ननु भावनायाः अर्थ्या विधिशब्देन पुरुषप्रवर्तनमशक्यं प्रमाणस्य वास्यादिवत्प्रेरकत्वायोगादित्याशङ्क्याह **भावनाया इति** । सा हि भावनायास्तदवच्छेदकत्वद्वारेण चार्थाद्धात्वर्थस्योपायतां बोधयति विधिर्बोधयित्वा च तदिच्छामुपाहरति इच्छंश्च पुरुषः प्रवर्तते । तदनेन क्रमेण नियुञ्जाना चोदना धर्ममवबोधयतीत्यर्थः । **ब्रह्मचोदना** ब्रह्मवाक्यम् । यथा धर्मचोदना प्रवृत्तिहेतु बोध जनयति नैवं ब्रह्मचोदनेत्याह । **अवबोधस्यैवेति** । ब्रह्मचोदनया सिद्धवस्तुविषयस्य प्रवृत्त्यहेत्वर्थमात्रावबोधस्य जन्यत्वादिति भाष्यार्थः । ननु मा नाम जनि धर्मबोधवद् ब्रह्मबोधाद्विषये प्रवृत्तिः स एव तु विधितः किं न स्यादिति शङ्कते **नन्विति** । विध्येकवाक्यत्वेन वस्तुबोधनाद्वेदान्ता न सिद्धबोधमात्रपर्यवसाना इत्यर्थः ।

५० । १३

भाष्ये ऽवबोधनिष्ठेन एव विध्यविषयत्वे हेतुगर्भ इति व्याचष्टे **अग-मभिसंधिरिति** । यथा विशिष्टविधौ विशेषणविधिरर्थान्न विशेषणे तात्पर्यं वाक्यभेदादेवं विषयविशिष्टप्रतिपत्तिविधिसामर्थ्याद् ब्रह्मनिश्चय इत्याशङ्क्याह **न च बोधस्येति** । विशिष्टक्रियाविधानादुक्ता विशेषणस्य प्रमा वैशिष्ट्यस्य वास्तवत्वात् । प्रतिपत्तिविधिस्तु न विशेषणसत्तामाक्षिपति । यच्च धेनु-

,, । २

[1] स्वशब्दो नास्ति मु भा पु । परं तत्र १ पाठान्तर दृष्टव्यम । एतद्व्याख्यानसारास्य सूचितश्च तत्र स्वशब्द । [2] चेदर्नेति १ प पा [3] विधेर्यक्तेति ३ पु पा

मुपासीतेत्यादावारोप्यस्यापि[1] विधेयधीविषयत्वादित्यर्थः । एवं क्रमप्रमाणाभावसिद्धौ

ब्रह्मधीर्न नियोगेन धर्मबुद्धेरनन्तरा ।
तत्क्रमे मानहीनत्वात् स्नानभुज्यादिधीरिव ॥

५१ । १६ नित्यानित्यवस्तुविवेक इति भाष्यमाक्षिपति **तद्विषयश्चेदिति** । अनित्याद् ब्रह्मणो विवेकः किं निश्चय उत ज्ञानमात्रम् । आद्यं दूषयति **कृतमिति** । द्वितीये विपर्ययः संशयो वा । नाद्यः । ततः शास्त्रश्रवणे प्रवृत्त्ययोगात् । न द्वितीयः । प्रपञ्चाऽनित्यत्वानिश्चये तद्वैराग्याऽयोगादित्याह **तथा चेति** । समाधत्ते **तस्मादिति** । निश्चय एव विवेकः । न च शास्त्राऽनारम्भः । इदं नित्यमिदमनित्यमित्यनिश्चयात्[2] । आत्माऽनात्मसमुदाये नित्यत्वमनित्यत्वं च स्तो धर्मौ तयोश्च धर्मिभ्यां भवितव्यमित्येतावन्मात्रं निश्चितम् । यद्यपि घटादेरनित्यता ऽवधारिता तथापि सकलानात्मसु नावधारितेति । नित्यत्वस्य व्याख्या **ऋतमिति** । उक्तविवेकस्य प्रयोजनमाह **तथा चेति** ।

सत्याऽसत्ययोरुपादेयाऽनुपादेयत्वे हेतुमाह **तदेतदिति** । सुखत्वान्नित्यमुपादेयं दुःखत्वादनित्यं त्याज्यमित्यर्थः । दृष्टे ऽनुभव उपपत्तिस्त्वदृष्टे । विगीतं सदधिष्ठानमसत्यत्वाद्गन्धर्वपुरीवद् इत्यादिरूपाऽसिद्धिमाशङ्क्याह **न खल्विति** । न श्रेयतो विवेकस्य स्वरसत उदये शास्त्रविफलता सगुणनिर्गुणविवेकाखण्डसमन्वयादेरसिद्धेरिति । न नित्यादिविवेकमात्रं वैराग्यहेतुः किं तु तदभ्यास इत्याह **अथास्येति** । अस्य पुरुषश्रेष्ठस्य संसारसमूहे ऽनित्यत्वादिविषयं प्रसङ्ख्यानं धीसन्ततिरूपावर्तते इत्यन्वयः । **अर्वाचिः** नरकविशेषः ।

५२ । ११ **जायस्व म्रियस्वेति** । पुनः पुनर्जायते म्रियते चेत्यर्थः । क्रियासमभिहारे लोडिति पौनःपुन्ये सर्वलकारापवादेन लोटः स्वादेशस्य च विधानात् । आब्रह्मलोकमर्वाचिपर्यन्तं जननमरणाभ्यामावर्तमानं क्षणादावान्तरसर्गपर्यन्ते[3] काले संसारसागरस्यो[4]ऽभिभूतैरनिशमुह्यमानमितस्ततो नीयमानमात्मानमन्यं च जीवसमूहमवलोक्येति योजना ।

[1] धीविषयत्वादिति २ पु. पा । [2] इदं नित्यमिदमनित्यमिति निश्चयादिति २ पु. पा ।
[3] क्षणादावान्तरसर्गपर्यन्तेष्विति ३ पु. पा । [4] सागरस्येति २-३ पु. नास्ति। [5] ४ पु. तथा पाठस्य दृष्टत्वादुपर्यसामञ्जस्याच्चापरि तथैव निवेशितम् । मूलेऽपि अयमेव पाठः प्रायः उपलभ्यते ।

उक्तपरिभावनाया इहामुत्रार्थभोगविरागहेतुतामाह **ततो ऽस्येति** । ५२ । १६
अनित्यसंसारस्य किंचिदधिष्ठानमस्तीति इयान्[1] विवेको न तु ब्रह्मेति ।
तदुक्तम् **ईदृशादिति**[1] आभोगो मनस्कारः । आदर इति यावत् । अतदा-
त्मिका । वैराग्यस्य शमादिहेतुतामाह **तत इति** । त्वाषा जटा[2] अस्य सन्तीति
तथोक्तः । अद्वैव तत्त्वविषया वितमस्य न गतादीति तथा ऽभिहितः[4] ।
मोक्षेच्छा भवतु कुतस्तावता ब्रह्मजिज्ञासा अत आह **तस्य चेति** ।

नित्याऽनित्यविवेकादिहेतुत्वस्याथशब्दादवगतेः किमत शब्देनेत्या-
शङ्क्य नानेन जिज्ञासां प्रति साधनकलापस्य हेतुतोच्यते किं तु तत्स्वरूपा-
ऽसिद्धिपरिहारहेतुरभिधीयते इत्याह **अत्रैवमित्यादिना** । शल्कं शकलम् । ११ । १८
शुचि नरशिरःकपालं प्राण्यङ्गत्वाच्छङ्खवदित्यस्य नारं स्पृष्ट्वाऽस्थि सस्नेहं सवासा
जलमाविशेदित्यागमविरोधः । कृतकत्वानुमानानुगृहीतात्तद्यथेति वाक्यात्
न्यायहीनम् अपामेत्यादिवाक्यमापातिकामृतत्वादिपरं ग्राह्यमित्याह **क्षीय-
तेति** । यत्त्वभिहितं भास्करेण नित्यानित्यविवेकादेरप्रकृतत्वान्न तदान-
न्तर्यमथशब्दार्थो ऽत एव कर्मणां क्षयिष्णुफलत्वं ब्रह्मज्ञानस्य च मोक्षहे-
तुत्वमतःशब्देन न परामृष्टुं युक्तमिति तद्भाष्यभावव्याख्यया ऽनुकम्प्यते
**अत्र चेति** । नहि सकला वेदान्ताः परामृश्यन्त इत्याह **यागत्वादीति** ।
अथशब्दो[6] ऽहेतुत्वसमर्थनयोग्यत्वादित्यर्थः । हेतुमद्ब्रह्मजिज्ञासाया
हेतूनां नित्यानित्यविवेकादीनां सूत्रकारस्य बुद्धिस्थत्वात्तदानन्तर्यार्थत्वमथ-
शब्दस्य युक्तमेव[7] ।

चतुर्थीसमासाभावे हेतुमाह **तादर्थ्येति** । पाणिनिः किल चतुर्थी ५५ । १३
तदर्थार्थबलिहितसुखरक्षितैरिति तादर्थ्यसमासं सस्मार । चतुर्थ्यन्तः
शब्दस्तदर्थवचनादिभिः शब्दैः समस्यते । चतुर्थ्यन्तशब्दार्थस्तच्छब्देन
परामृश्यते । तस्मै इदं तदर्थम् । यथा कुण्डलाय हिरण्यमित्यत्र कुण्डलं
चतुर्थ्यन्तशब्दार्थस्तच्छब्देन हिरण्यं तत्र कुण्डलशब्दश्चतुर्थ्यन्तः कुण्डल-

1 इयान् इति ३ पु. नास्ति ।
2 जटाकाश इति ३-२ पु. पा. ।
3 यत भास्करीयमिति ३ पु. पा. ।
4 गतादृशादीति स. भा. पु. पाठः ।
5 तथोक्त इति ३ पु. पा. ।
6 अथशब्देति ३ पु. पा. ।
7 सक्रमेवेति २ पु. पा. ।

शेषवाचिना हिरण्यशब्देन समस्यते कुण्डलहिरण्यमिति । तथा ऽर्थशब्दा-
दिनापि ब्राह्मणार्थं पयः इत्यादि द्रष्टव्यम् । कात्यायनेन त्वयं समासः
प्रकृतिविकृत्योर्नियमितः चतुर्थी तदर्थमात्रेणेति चेत्तर्हि* सर्वत्र प्रसङ्गो ऽवि-
शेषात् प्रकृतिविकृत्योरिति चेदश्वघासादीनामुपसंख्यानम् इति । एवं
५५ । १४ चार्थात्प्रस्तुते तन्निषेधसिद्धिरित्याह **प्रकृतीति । इत्येवमादौ** ब्रह्मजि-
ज्ञासेत्येवमादावित्यर्थः । नन्वश्वार्थो घासो ऽश्वघास इत्यादावप्रकृतिवि-
कारे ऽपि तादर्थ्यसमासो दृष्ट इत्याशङ्क्य कात्यायनेनैव समासान्तरमुपसंख्या-
तमित्याह **अश्वघासादय इति ।**

ननु षष्ठीसमासाभ्युपगमे ब्रह्मणो जिज्ञासाव्यावर्तकत्वेन गुणत्वात्प्रधा-
नपरिग्रह इति भाष्यस्याप्राधान्यभङ्गस्तत्राह **षष्ठीसमासे ऽपीति ।**
**ब्रह्मोज्झं** वेदत्यागः । प्रतिपत्तौ विशेषणत्वेनानुबध्यतइत्यनुबन्धः । स्वरू-
पेण निरूपितायां जिज्ञासायां पश्चात्संबन्धिन्यपेक्षा ब्रह्म च ज्ञानद्वारा जिज्ञा-
सारूपनिरूपकमिति प्रथमोदिताकाङ्क्षावशेन ब्रह्मजिज्ञासायाः कर्मत्वेन संब-
ध्यते न तु संबन्धिमात्रतयेत्यर्थः । जिज्ञासाज्ञानयोर्विषयाधीननिरूपणं
५६ । १६ वैधर्म्यदृष्टान्तेन प्रपञ्चयति **न हीति ।**

ननु प्रमाणयुक्त्यादि जिज्ञासायाः कर्म भविष्यति। ब्रह्म तु
संबन्धित्वेन निर्दिश्यताम् । न । निर्दिष्टकर्मलाभे कल्पना‡नुपपत्तेरित्याह
**नन्वित्यादिना । संभन्त्स्यते** संबद्धुं भविष्यति । ननु श्रुतकर्मत्यागा-
ऽयोगे स्थिते कथं शेषषष्ठी शङ्क्यतइत्यत आह **निगूढाभिप्राय इति ।**
प्रमाणादिबहुश्रौतत्व§सिद्धिरित्यभिप्रायस्य निगूढता । ननु ब्रह्मसंबन्धिनी
जिज्ञासेत्युक्ते कर्मा ऽनिर्देशादनिरूपितरूपा जिज्ञासा स्याद् नेत्याह **सामा-
न्येति ।** बहुप्रतिज्ञानां श्रौतत्वलाभा¶त्कथं प्रयासवैयर्थ्येन परिहारस्तत्राह
**निगूढेति ।** एकस्यापि प्रधानस्य श्रौतत्वं वरं न तु गुणानां बहूनामपीति ।
५७ । ५ **वाच्यस्येति ।** शब्दोपात्तत्वेन साक्षात्संनिधिः । प्रथमापेक्षितस्येत्याकाङ्क्षा ।
प्रथमसंबन्धार्हस्येति योग्यता । एतैर्युक्तस्य कर्मत्वस्य संबन्धः प्रथमः सन्नपि

* तर्हीति नास्ति ३ पु. ।
† सर्वत्वेति पाठः ३ पु. ।
‡ कर्मकल्पनेति ३ पु. पा. ।
§ बहुप्रतिज्ञानां श्रौतत्वादिति ३ पु. पा. ।
¶ श्रौतत्वादिति २ पु. पा. ।

जघन्यः । यतेः रहितस्य संबन्धिमात्रस्य संबन्धो जघन्यः सन् प्रथम इति कल्पनं व्याहतमित्यर्थः । कर्तृकर्मणोः कृतीति कृद्योगे कर्मणि षष्ठीस्मरणा-द्वाच्यं कर्मत्वं जिज्ञासापदस्य चाकारप्रत्ययान्तत्वात् कृद्योगः । यस्तु कर्मणि चेति कर्मणि षष्ठ्या समासप्रतिषेधः स च उभयप्राप्तौ कर्मणीति या कर्तृकर्म-णोरुभयोरपि सामर्थ्यादुपादानप्राप्तौ कर्मण्येवेति नियमिता षष्ठी तद्विषयः । यथा ऽऽश्चर्यो गवां दोहो ऽगोपालकेनेति । अत्र ह्याश्चर्यं व्यज्यते यदि दुर्दोहानां गवां दोहे कर्मत्वमकुशलस्य चाऽगोपालस्य कर्तृत्वम् । प्रस्तुते तु ब्रह्मकर्मत्वमेवोपादीयते न कर्तृगतो ऽतिशय इत्युभयप्राप्त्यभावात्कर्तृकर्मणोः कृतीत्येव षष्ठी । तेन ब्रह्मजिज्ञासेत्युपपन्नः समास इति ।

भाष्ये प्रत्यक्षनिर्देशो न युक्तः* शाब्दत्वात्कर्मत्वस्य तत्राह **प्रत्यक्षेति** । ५१ । ९
अविरुद्धमपि परोक्षत्वं व्याख्येयप्रत्यक्षत्वस्य प्रतियोगित्वाद्व्याख्यातम् । परमते कर्मत्वस्य लाक्षणिकत्वं चरमान्वयप्रसञ्जनार्थम् । नन्वगुकर्मापि ज्ञानस्येच्छा-विषयत्वं मोक्षजिज्ञासापदात्प्रमीयताम् । न । न्यायसूत्रे उपदेशमात्रेणा ऽवि-श्वासादित्याह **नेति** । साक्षात्कारसाधनं ज्ञानमिच्छाविषय इति प्रतिज्ञाय फलविषयत्वादिच्छाया इति हेतुरयुक्तो व्यधिकरणत्वादतआह **तदुपायेति** । फलेच्छाया एवोपायपर्यन्तं प्रसरादविरोध इत्यर्थः । **भवतु ब्रह्मविषया-ऽवगतिरिति** । स्वरूपावगतिः स्वविषयव्यवहारहेतुत्वेन तद्विषयोक्ता । ब्रह्मणोऽपि धर्मवदसुखत्वान्न तदवगतिः पुमर्थ इत्याह **एवमपीति** । श्रुतिस्वानुभवावगतनिर्दुःखानन्दमभिप्रेत्य परिहारो **ब्रह्मावगतिर्हीति** । **प्रतिभान्** प्रतिभासमानः । **अर्थ्यमानत्वात्** प्रार्थ्यमानत्वात् । अविद्या-निवृत्तिर्न स्वरूपा ऽवगत्या नित्यनिवृत्त्यापातादपि तु वृत्तित इत्याह **अवि-द्यादीति** ।

पदार्थान्व्याख्याय सूत्रतात्पर्य‡माह **तस्मादित्यादिना** । **निग-** ५८ २२
**लितदुःखेति** वृत्तिव्यक्तस्वरूपाभिप्रायम् । सूत्रस्यानुवादत्वव्यावृत्तये तव्य-प्रत्ययमध्याहरति **एषितव्यमिति** । किमिति ज्ञानमेषितव्यं वेदान्तेभ्य एव तत्सिद्धेरिति न । सन्देहादिना प्रति§बन्धादित्याह **नचेति** । नन्वि-

* निर्देशो ऽनुपपन्न इति २ पु. पा. ।
† ब्रह्मस्वरूपेति २ पु. पा. ।
‡ सूत्रवाक्यार्थमिति ३ पु. पा. ।
§ सन्देहादिप्रतीति ३ पु. पा. ।

५९ । ३ च्छाया विषयसौन्दर्यलभ्यत्वात्किं तत्कर्तव्यतोपदेशेन तत्राह **इच्छानिमित्तेनेति**। ज्ञातुमिच्छा हि सन्दिग्धे विषये निर्णयाय भवति निर्णयश्च विचारसाध्य इति तत्कर्तव्यताऽर्थाद्गम्यत इत्यर्थः। आर्थिके चास्मिन्नर्थे कर्तव्यपदाध्याहारः। अतस्तु मुमुक्षानन्तरं ब्रह्मज्ञानेच्छा भवितुं युक्ता इत्येष एव। तथा चाधिकारार्थत्वमथशब्दस्य निषेद्धुं ज्ञानेच्छा जिज्ञासाशब्दार्थ इत्युपपादनेन न विरोध इति। ननु धर्मग्रहणाद्द्विर्धर्मानामर्थविवक्षा तत्र कृता न वेदान्तानाम्। नेत्याह **धर्मग्रहणस्येति**।

उपलक्षणतया वेदान्तानामर्थविवक्षाप्रतिज्ञावद्विचारप्रतिज्ञाऽपि तत्रैवास्त्वित्याशङ्क्योपरि प्रतिपादनाऽदर्शनान्नेत्याह **यद्यपीति**। ब्रह्मविचारप्रतिज्ञायास्तत्र सम्भवमङ्गीकृत्य परिहार उक्तः। इदानीं सम्भव एव नास्तीत्याह **नापीति**। अविरक्तस्य ब्रह्मविचारे प्रवृत्त्ययोगादित्यर्थः। ब्रह्ममीमांसारम्भायेति प्राचा तन्त्रेणागततोक्ता[1]। **नित्यादिविवेकानन्तर्येणेति**। तत्रत्यप्रथमसूत्रेणेहत्यप्रथमसूत्रस्य[2]। युष्मदस्मदित्यादिना ह्यहंप्रत्यये जीवस्य प्रसिद्धेरससारिब्रह्मात्मत्वस्य चाभावाद् विषयमाक्षिपेत्। अत्र तृपेत्य ब्रह्मात्मभावं वेदान्तेभ्यस्तत्प्रसिद्धिसिद्धिभ्यामाक्षेप इति विभागमाह **वेदान्तेभ्य इति**। समुदयप्रसिद्धस्य जिज्ञास्यत्वसम्भवादाक्षेपायोगमाशङ्क्याह **निश्चयज्ञानेनेति**। अनिश्चायकत्वं तु वेदान्तानामयुक्तं निर्दोषत्वादित्याह

,, । १५ **अपौरुषेयत्वेनेति**। निष्पादिता प्रमितिलक्षणा क्रिया यस्य कर्मणो विषयस्य स इह तथोक्तः। यद्यपि निर्दोषो वेदस्तथापि सामान्यतो दृष्टनिबन्धनव्यवच्छेदनस्याभासप्रतिबद्धः संदिग्धार्थः स्यादतो विचारात् प्रागपि तत्प्रसिद्धिं[3] दर्शयन्नप्रसिद्धत्वपक्षोक्तं दोषमुद्धरति **प्रागपि**[4] **ब्रह्ममीमांसाया इति**। भाष्ये ब्रह्मास्तित्वप्रतिज्ञा भाति[5] कथं प्रतीतिपरत्वं व्याख्येत्याशङ्क्य प्रत्याय्येन[6] प्रत्ययलक्षणामाह **अत्र चेति**। मुख्यार्थपरिग्रहे बाधमाह **तदस्तित्वस्येति**। **विमर्शे** संशये। **देहाद्यभेदेनेति** भेदाऽभेदमतेन शङ्का। तत्त्वमसिवाक्यनिर्दिष्ट[7] तत्पदलक्ष्यप्रसिद्धिमुक्त्वा वाच्यप्रसिद्धि-

[1] सूत्रस्यागततोक्तेति ३ पु. पा.। [2] ब्रह्मात्मतामिति ३ पु. पा.
[3] वेदानामिति ३ पु. पा.। [4] प्रागपीति २-३ पु. नास्ति।
[5] ब्रह्मास्तित्व प्रतिभातीति २ पु. पा.। [6] प्रत्ययेनेति ३ पु. पा.।
[7] निर्दिष्टेति २ पु.। निर्दिष्टेति ३ पु. पा.।

माह **अविद्योपाधिकमिति** । अविद्याविषयीकृतमित्यर्थः । **शक्ती-ति** । शक्तिज्ञानाभ्यां कारणं लक्ष्यते । यो हि जानाति शक्नोति च स करोति नेतर इत्यनुविधानादित्यर्थः ।

सदेवेत्यादिवाक्यात्प्रसिद्धिमुक्त्वा पदादपि सेत्स्यतीति वक्तुं पृच्छति **कुतः पुनरिति** । वाक्यात्प्रसिद्धस्यैव पुनरपि कुतो हेत्वन्तरात्प्रसिद्धिरि-त्यर्थः । ननु बृहतिधातुरतिशायने वर्ततामापेक्षिकं तु तद् बृहत् कुम्भ इतिवद् नेत्याह **अनवच्छिन्नमिति** । प्रकरणादिसङ्कोचकाभावादित्यर्थः । पदान्तरमात्रान्नित्यत्वादिबोधकं नित्यादिपदम् । उक्तविशेषणानामन्यतमेनापि रहितस्य न महत्त्वसिद्धिरतो ब्रह्मपदादुक्तवस्तुसिद्धिरिति । **तत्पदार्थस्य शुद्धत्वादेरिति** समानाधिकरणे षष्ठी । जीवस्य हि विशुद्धत्वादेव तत्पदेन समर्प्यते न पदार्थान्तरमिति । प्रसिद्धिर्हि ज्ञानं ज्ञातारमाक्षिपतीति तेन व्यवहितमपि सर्वस्येत्येतदस्तित्वप्रसिद्धिरित्यनेन सम्बन्धनीयम् । तथासति प्रतिज्ञाविशेषणं सत्कैमुतिकन्यायं द्योतयति न तु सर्वस्यात्मत्वादिति हेतुविशेषणं वैयर्थ्यादित्यभिप्रेत्याह **सर्वस्येति** । पाप्मनः पाप्मा यस्य स तथा । इदं वर्ततीति हार्दिकः । सर्वस्य ब्रह्मास्तित्वप्रसिद्धिः । सर्वो हि तत्प्रत्येतीति साध्यहेत्वोर्विशेषमाशङ्क्याह **प्रतीतिमेवेति** । अहं न नास्मीति प्रत्येतीति योजनायाम् आस्तिक्यं न सिध्येत् । असत्त्वनिषेधेऽप्यनिर्वाच्यत्वस्यानिवारणात् । अतोऽहमस्मीति न प्रत्येतीति योजनैव साध्वीति ।

अहमिति प्रतीतेरहङ्कारमात्रविषयत्वान्नात्मप्रसिद्धिः सिद्ध्यादीति शङ्कते **नन्वहमिति** । ऋजुयोजनायां ह्यव्याप्यादव्यापकप्रसञ्जनं स्यान्न हि प्रसि-द्ध्यभावो नास्तित्वप्रतीत्या व्याप्तः । सुषुप्तौ विरुद्धाभावप्रतीतिप्रसङ्गात् । तस्माभूदिति व्यवहितेन सम्बन्धयति **अहमस्मीति न प्रतीयादिति** । शङ्कितुरनुशयमपाकरोति **अहङ्कारास्पदमिति** । अहमिति प्रतिभासस्य चिदचित्संवलितविषयत्वमध्यासभाष्ये समर्थितम् । तथा चाहमिति प्रतीति-रात्मविषयाऽपि । अत आत्मप्रसिद्ध्यभावेऽहमिति प्रतीतिर्न स्यादित्यर्थः ।

६० । २२

६१ । ११

---

इह नास्ति २-३ पु ।

[1] कुम्भवदिति ३ पु. पा ।

[2] नित्यत्वादिवाचकमिति ३ पु. पा ।

नित्यत्वादिति २ पु. पा ।

**तदस्त्वमेति** । तत्त्वमसिवाक्ये तत्पदस्य प्रकृत*सच्छब्दवाच्यब्रह्मपरामर्शिनस्त्वंपदेन सामानाधिकरण्यादित्यर्थः । ननु ब्रह्मात्मैकत्वस्य वाक्यार्थस्याऽप्रसिद्धत्वेनाप्रतिपाद्यत्वाक्षेपे पदार्थप्रसिद्धिप्रदर्शनमनुपयोगीत्याशङ्क्याह **तस्मादिति** । पदार्थयोरवगृतयोस्ताभ्यां गृहीतसंबन्धपदद्वयसमभिव्याहारात्पूर्वो वाक्यार्थः सुज्ञान इत्यर्थः ।

एवं तावदापाततो वाक्यात्पदतश्च प्रसिद्धेर्ब्रह्मणः शास्त्रेण शक्यप्रतिपादनत्वसम्बन्ध सामर्थ्याऽसाधारणरूपविषयत्वं समाधातुमाक्षिपतीत्याह

६१ । २० **आत्मत्वेनेति** । ब्रह्मण आत्मत्वेन लोकप्रसिद्ध्यभावाद्वाक्यीयप्रसिद्धि†रनूद्यत इत्याह **तत्त्वमसीति** । ननु तृतीयाया इत्थंभावार्थत्वं विहायात्मत्वेन हेतुना ब्रह्म यदि लोके प्रसिद्धमात्मा च ब्रह्मेति त्वयैवोक्तत्वादिति व्याख्यायतां तदा हि लोकशब्दो रूढार्थः स्यात् । उच्यते । तत्पदार्थमात्रस्य प्रसिद्धिस्तदाऽनूदिता स्यात् । तस्याश्चाजिज्ञास्यत्वं प्रति न हेतुत्वम् । ज्ञाते ऽपि पदार्थे वाक्यार्थस्य जिज्ञासोपपत्तेरिति । स्यादेतद्यदि ब्रह्मात्मत्वेन प्रसिद्धमिति भाष्यमनुपपन्नम् । न हि महावाक्ये ब्रह्मानुवादेनात्मत्वं विधीयते किं तु लोकसिद्धजीवानुवादेनागममात्रसिद्धब्रह्मत्वम् अत आह **अभेदविवक्षयेति** । अन्यत्र हि वाक्यार्थबोधोत्तरकाले पदार्थानामुद्देश्योपादेयभावो न व्यावर्तते अत्र त्वखण्डवाक्यार्थसाक्षात्कारे स बाध्यत इति द्योतयितुमात्मपदे प्रयोज्य ब्रह्मपद ब्रह्मपदे चात्मपदं प्रयुक्तमित्यर्थः ।

ननु विरुद्धा प्रतिपत्तिर्विप्रतिपत्तिः सा च वस्त्वभावसाधिकेति कथं

,, । २४ विषयलाभस्तत्राह **तदनेनेति** । न विरुद्धप्रतीति‡मात्रेणाभावावगमः किं तु प्रमाणमूलतयाऽतः साधकबाधकप्रमाणाभावे विप्रतिपत्तिः संशयबीजमित्यर्थः । ननु साधारणाकारदृष्टौ संशयो न त्विह क्षणिकविज्ञानस्थिरभोक्त्रादावस्ति साधारणो धर्म इत्याशङ्क्य विप्रतिपत्त्यन्यथानुपपत्त्या तं साधयति **विवादाधिकरणमिति** । देह आत्मा इत्यादिविवादाश्रयो धर्मी पराभ्यावृत्तो ऽहमास्पदं सर्वतन्त्रेष्वभ्युपगत इति मन्तव्यम् । तत्र हेतुमाह **अन्यथेति** । आश्रयशब्दो विषयवाची । भिन्नविषया विप्रतिपत्तयो न स्युरतो

* प्रकृतेति नास्ति २ पु॰ ।  † वाक्यप्रसिद्धिरिति ३ पु॰ पा॰ ।
‡ विरुद्धप्रतिपत्तीति ५ पु॰ पाठान्तरम् ।

विवदमानानामप्येकमालम्बनमविगीतम्। अत्रोपपत्तिमाह **विरुद्धा हीति**।
विप्रतिपत्तिशब्दावयवप्रतिपत्तिशब्दार्थस्य ज्ञानस्य सालम्बनत्वात् यत्किञ्चि-
दालम्बनं सिद्धम्। वीत्युपसर्गप्रतीतविरोधवशात्तु तदेकमिति सिध्यति।
एकार्थोपनिपाते हि धिया विरोधः। अत्र वैधर्म्योदाहरणमाह **न हीति**।

साधारणधर्मिस्फुरणे ऽपि न शास्त्रार्थस्य बुद्धिसमारोहो न हि ६२। १०

साधारणः शास्त्रार्थस्तत्राह **तस्मादिति**। यस्माद्विप्रतिपत्तिरेकालम्बना
यतश्चैकस्मिन्नालम्बने पूर्वधीविषय*निषेधेन विरुद्धधीरुदेति तस्मात्प्रतियो-
गितया विप्रतिपत्त्येकस्कन्धत्वेन तत्त्वम्पदार्थतदेकत्वप्रतीतिर्लोकशास्त्राभ्या
सर्वैरेष्टव्येति। तर्हि क्व विगानमत आह **तदाभासत्वेति**। लोका-
यतिकादीनां सा प्रतीतिराभासः। आस्तिकानां तत्पदार्थप्रतीतिस्तत्त्वमर्थै-
कत्वप्रतीतिश्च गौणतया तथा त्वंपदार्थधियो ऽसद्वस्त्वालम्बनत्वे च
विगानमिति। त्वंपदार्थविप्रतिपत्तिप्रदर्शनस्य वाक्यार्थविप्रतिपत्तौ पर्यवसान-
माह **अत्रेति**। देहादिक्षणिकविज्ञानपर्यन्तानां **चैतन्यं** चेतनत्वमात्म-
त्वमित्यर्थः। भोक्तैवात्मेति-पक्षे भोक्तृत्वं किं विक्रिया उत चिदा-
त्मत्वम्। नाद्यः। कर्तृत्वपक्षादविशेषादित्याह **कर्तृत्वे ऽपीति**। ,, । १५
द्वितीये प्रत्याह **अभोक्तृत्वे ऽपीति**। सक्रियत्वरूपभोक्तृत्वाभावे ऽपी-
त्यर्थः। सांख्या हि जननमरणादिनियमाद् निर्विशेषा अपि चेतना प्रतिदेह
भिन्ना इति मेनिरे। भिन्नानां च कुम्भवद्विनाशजाड्यापत्तिरतो न नित्य-
तत्पदार्थैकतेति। अथ वा सैवानुमाय भेदादिनित्यता-ऽभेदाभ्युपगम एव
ब्रह्मात्मैकत्वविरोधीत्याह **अद्वैतेति**। लोकायतिकादीनामीश्वरमतानुभाषणे-
नैव तत्पदार्थ ईश्वरे ऽपि विप्रतिपत्तिः सूचिता ऽतस्मादृगतब्रह्मात्मैकवाक्या-
र्थेऽपि विप्रतिपत्तिरर्थादुक्तेत्याह **त्वंपदार्थेति**। **वेदप्रामाण्यवादिनो**
मीमांसकादयः। **शरीरादिभ्य इति** शरीरादिशून्यपर्यन्तेभ्य इति
**जीवात्मभ्य इति** कर्तृभोक्तृभ्यः केवलभोक्तृभ्य इति **स्वाभावि-
कमस्येति** नैयायिकादिमतेनेत्यर्थः। युक्तिवाक्येति भाष्यस्यैत-
च्छब्दस्य प्रत्येकं युक्तिवाक्याभ्यां संबन्धीकरोति **युक्तीति**। आत्मा स

पूर्वविषयेति ३ पु. पा.    १ विप्रतिपत्तिदर्शनस्येति २ पु. पा.।

भोक्तुरिति पक्षे सूत्रं युक्तिवाक्ये अन्यत्र तदाभासाविति। अनर्थं चेया-
६३। १६ दिति भाष्यार्थमाह **अपि चेति**। भाष्ये तर्कस्य पृथगुक्तेर्वेदान्तमीमांसा किं न तर्कः। नेत्याह **वेदान्तमीमांसेति**। अर्थापत्तिरनुमानं चात्र तर्को ऽभिमतः तद्रूपा वेदान्तमीमांसा तस्या अविरोधिनः श्रुतिलिङ्गादयस्तानीयाः पाञ्चमिकाश्च श्रुत्यर्थादयो वेदप्रामाण्यपरिशोधकाः कर्ममीमांसायां विचारिताः। वेदस्य प्रत्यक्षादीनां तदर्थादीनां[*] च लक्षणादीनि न्यायशास्त्रैर्विचारितानि। स्मृत्यादिभिश्च वेदानुमाने ऽनुमानचिन्तोपयोगः। तेन विहितजातिव्यक्तिपदार्थविवेके वेदस्वरूपग्रहणे च न्यायशास्त्रस्योपयोगः। सर्वे चैते प्रमाणानुग्राहकत्वेन तर्का उच्यन्त इति[1]॥

६४। १ **जन्माद्यस्य यतः॥ २॥**

अनन्तराधिकरणेन प्रारिप्सितसमस्तविचारस्य सम्बन्धमाह **सदेवमिति**। सकलशास्त्रं प्रतीकेन संगृहीतम्[2]। विषयादिसद्भावात् समर्थिते विचारारम्भे तमुपजीव्योत्तरविचारप्रवृत्तेर्हेतुहेतुमल्लक्षणः संबन्ध इत्यर्थः। प्रथमसूत्रेण द्वितीयसूत्रस्याक्षेपलक्षणां सङ्गतिमाह **एतस्येति**। मुमुक्षुणा ब्रह्मज्ञानाय वेदान्तवाक्यविचारः कर्तव्य इति प्रतिज्ञायां ब्रह्मस्वरूपविचारवत्प्रमाणयुक्तिसाधनफलविचाराणामर्थात् प्रतिभाने कथं प्रथमं ब्रह्मैव विचार्यते ऽत आह **अत्रेति**। अत्र यतो वेत्यादिवाक्यं ब्रह्म लक्षयति उत नेति लक्षणस्य लोकप्रसिद्ध्यप्रसिद्धिभ्यां विशये[3] पूर्वपक्षमाह **तत्र यद्यपीत्यादिना**। पूर्वाधिकरणाक्षेपपरिहारत्वा[4]दस्य तत्रत्यब्रह्मलक्षणनिरूपकत्वाच्च तदीयमेव मुमुक्षुभिर्नापितमोक्षलाभः प्रयोजनमिति न पृथग्वक्तव्यम्। यदाह्याचार्यः शबरस्वामी।

> आक्षेपे चापवादे च प्राप्त्यां लक्षणकर्मणि।
> प्रयोजनं न वक्तव्यं यच्च कृत्वा प्रवर्तते॥ इति।

यत्र पूर्वाधिकरणसिद्धान्ताक्षेपेण पूर्वः पक्षः तत्राक्षेपिकी। यत्र तु पूर्वाधिकरण[5]सिद्धान्तेन पूर्वपक्षः तत्रापवादिकी सङ्गतिः। प्राप्तिस्तदर्थाचिन्ता

[*] तदर्थानामिति ३-८ पु पा।
[1] अत्र प्रथमं जिज्ञासाधिकरणं १ सूत्रम्-अथातो ब्रह्मजिज्ञासा १ इति।
[2] गृहीतमिति ३ पु पा।
[3] विषये इत्यसमञ्जसः पाठ १ पु।
[4] परिहारादिति ३ पु पा।
[5] सिद्धान्तेत्यारभ्यैतावदन्तो ग्रन्थो नास्ति १ पु।

कृत्वा प्रवर्तनं कृत्वा चिन्ता सा चाभ्युपगमवाद इति । सजातीयविजातीय-
द्रव्याद्*व्यावृत्तिप्रयोजनो धर्मो लक्षणं नाम । तदिह परिदृश्यमानं जगदेव
लक्षणं ब्रह्मण उत नित्यशुद्धत्वादिस्वरूपमिति विकल्प्य नाद्य इत्युक्ते द्वितो-
यमाशङ्क्याह **न चेति ।** ननु लोकाऽसिद्धमपि वेदेन ज्ञाप्यतामत आह
**एवं चेति ।** न जगद् ब्रह्मलक्षणं किं तु तत्प्रति कारणत्वं तच्च जीवाविद्या-  ६४ । १८
विषयीकृतस्य धर्म इत्युपलक्षणमुपपादयति **मा भूदिति । तादात्म्ये-
नेति** ऐक्येन । ततो भेदेन **तद्धर्मतयेति । तदुत्पत्त्या त्विति ।**
तदुत्पन्नत्वेन जगत्स्वकारणं लक्षयति ज्ञापयति कारणत्वं तु लक्षणमिम-
त्यर्थः । **व्रज्याया गतेः ।** जन्म आदिर्ययोः स्थितिभङ्गयोस्तौ जन्मादी
इत्यन्यपदार्थो यदि विशेषरूपेण विवक्ष्यते तर्हि जन्मादी अस्येति निर्देशे
गौरवं स्यात्तन्मा भूदिति सामान्यविवक्षया नपुंसकप्रयोगः सूत्रे कृतः । तर्हि
नपुंसकैकवचनप्रयोगार्हं समाहारमाहेत्याह **लाघवार्येति ।**

> श्रुतीरविशदाः काश्चिद्भाष्याणि विषमाणि च ।
> वाचस्पत्युक्तभावानि पदशो विभजामहे ॥

तद्गुणसंविज्ञान इति । तच्छब्देन बहुव्रीह्यर्थोऽन्यपदार्थ उच्यते । तस्य
गुणत्वेन संविज्ञानं यस्मिन्समासे स तथोक्तः । सर्वस्य विशेषणत्वे समासा-
ऽसम्भवात् समासार्थैकदेशो विशेषणमिति लभ्यते । अनादौ संसारे कथं जन्मा-
दिमत्त्वमाह **जन्मन इति ।** श्रुत्या वा कथमयुक्तं निर्दिश्यत आह  ., । २०
वस्त्विति । नानादेः संसारस्यादिर्जन्माच्यते किं तर्हि प्रतिवस्तु । घटस्य
हि जन्मवादिरिति । इदमः संनिहितवचनत्वात्प्रत्यक्षमात्रपरामर्शित्वमाशङ्क्य
प्रतीतिमात्रं संनिधिरित्याह **अस्येति ।** सर्वस्य जगतो न जन्माद्या-
शादेरनादित्वात्तत्राह **पर्वेति ।** वियदधिकरण[१]न्यायात्सर्वस्या[२]ऽस्ति जन्मा-
दिमत्त्वमित्यर्थः । जगतो जन्मादेर्वा ब्रह्मासम्बन्धान्न लक्षणत्वमित्या-
शङ्क्याह **यत इति ।** व्याख्यानमेतदध्याहारात् । गत सूत्रपदानि व्याख्याय प्रथ-
मसूत्राद् ब्रह्मपदानुषङ्गेण तच्छब्दाध्याहारेण च वाक्यार्थमाह अस्य जगत

* द्रव्यादिति नास्ति १ ४ पु । ‡ ब्रह्मलक्षणमिति ३-४ प पा. ।
; नत्वेति २ पु· नास्ति । ` भाष्यरत्नाकरग्रहणम । तत्र·प्रति तत्र तत्र योध्यम ।
परामर्शित्वमयुक्तमित्याशङ्क्येति ३ पु पा । ¶ व्या सू अ २ पा ३ सू १ ।
'' तत्रापीति ४ पु· पा ।

इत्यादिना भाष्येण । तद्भिन्नैर्विशेषणैर्लक्षणे ऽतिव्याप्तिः परिह्रियतइत्याह **स्यादेतदित्यादिना** । स्वभाव एव नियन्तेति स्वभाववादो यदृच्छावादस्तु न किं चिन्नियामकमस्तीति । **व्यासेधति** प्रतिषेधति । उत्पत्तेः प्रागसतः कथं बुद्धावालेखनमत आह **अत एवेति** । यदसदिति प्रसिद्धं तद् बुद्ध्या-रूढरूपेण सदेव अन्यथा तुरङ्गशृङ्गवत् कर्मत्वनिर्देशायोगादिति सत्कार्यवा-दिनश्चाहुः ।

६५ । १६ **वैश्वानरीयेष्ट्यादिष्विति** । चतुर्थे स्थितम्* फलसंयोगस्त्व-चोदितेन स्यादशेषभूतत्वात्† वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते इत्यु-पक्रम्य यस्मिन् जातएतामिष्टिं निर्वपति पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवतीति श्रूयते । तत्र किं पूतत्वादि पितुः फलमुत पुत्रस्येति संदेहे फलस्य कर्तृगामित्वनियमादितरथा प्रेरणानुपपत्तेः पितुरिति प्राप्ते राद्धान्तः । यस्मिन् जाते निर्वपति‡ स पूत इति जातगामित्वेन फलाम्नानात् फलभो-क्तृत्वेना§चोदिते पितरि फलसंयोगो न स्याद्व्रतस्य तं प्रत्यशेषभूतत्वात् । यत्त्वफलभागिनो न प्रेरणेति । तन्न । पूतत्वादिगुणवत्पुत्रवत्तयैव पितुः प्रीत्युत्पत्तेः प्रेरणावकल्पनात् । अतः पुत्रगामि फलमिति । अत्रानेककर्तृभो-क्तृजीवानां सृज्यत्वेन निर्देशात् जगत्कर्तृत्वायोगउक्तो ।

६६ । ६ **मनसापीति** । जगतस्तान् प्रति कार्यत्वायोग्यतेति विशेषणद्वयेन जीवकर्तृकत्वनिषेधः । व्याकृतस्य इत्यनेनानभिव्यक्तबीजावस्थजगतो ऽभिव्य-क्त्यभिधानादणवः प्रागसद् द्व्यणुकाद्यारभन्तइति मतव्युदासः । शेषं विशदं‖ टीकायाम् । तदेव लिलक्षयिषितजगद्योनिब्रह्मसजातीयतया परभ्रमपरिक-ल्पितप्रधानादेरुक्तविधजगत्प्रकृतित्वं ब्रह्म व्यवच्छिनत्ति । विजातीयात्पुनः कार्यात्कारणत्वादेव । तथा च सजातीयविजातीयव्यवच्छेदकत्वेन¶ जगत्प्र-कृतित्वस्य सिद्धं लक्षणत्वम् । **धर्मलक्षणेति** । धर्म इति लक्षणमिति अवस्थेति त्रीणि लक्षणानि यस्य परिणामस्य स तथोक्तः । स चोत्पत्तावन्त-र्भवतीति । धर्मपरिणामं विवृणोति **धर्मिणो हीति** । कनकादेर्धर्मिणो

* चिन्तितमिति ३ पु॰ पा॰ ।

† जै॰ सू॰ अ॰ ४ । पा॰ ३ । सू॰ ३८ ।

‡ जाते एतामिष्टिं निर्वपतीति ३ पु॰ पा॰ ।

§ फलभागित्वेनेति ३ पु॰ पा॰ ।

‖ सुगममिति ३ पु॰ पा॰ ।

¶ व्यवच्छेदकत्वेनेति ३ पु॰ पा॰ ।

धर्मरूपपरिणामो नाम मुकुट*कटकादिरिति साङ्ख्यप्रक्रिया । तत्र निरूप्यमाणे परिणामशब्दालम्बने तस्य कटकादेर्हेमादित उत्पत्तिरित्यर्थः । लक्षणपरिणाममुदाहरति **एवमिति** । प्रत्युत्पन्नत्वं वर्तमानत्वं कटकादिकार्यस्य वर्तमानत्वातीतत्वभविष्यत्त्वरूपो लक्षणपरिणामः सोऽप्युत्पत्तिरित्यर्थः । अवस्थापरिणाममुदाहरति **एवमवस्थेति** । अतीतादेरेवातीततरत्वातीततरत्वातीततमत्वादिरूपो नवपुराणत्वाद्यापत्तिरवस्थापरिणामो नाम स चोत्पत्तिरेवेत्यर्थः । अपक्षयस्य विनाशान्तर्भावमाह **अपक्षयस्त्विति** । **तच्च न मूलकारणेनेति** । पुरुषाणां श्रुतिमन्तरेणातीन्द्रियार्थे दर्शनसामर्थ्याभावादित्यर्थः । न च सृष्ट्यादिविकारकथनादेव मूलकारणं द्रष्टृत्वानुमेयमन्यथाऽप्युपपत्तेरित्याह **महासर्गादिति** । परमकारणादुत्पत्त्यादयो न गृहीता इति शङ्कापनुत्तये योत्पत्तिर्ब्रह्मणो यतो वेति वाक्ये जायन्त इत्युत्पत्तिरभिहिता या च तत्रैव स्थितिर्जीवन्तीत्युक्ता यश्च तत्रैव प्रलयोऽभिसंविशन्तीत्युक्तस्त उत्पत्त्यादयः सूत्रे गृह्यन्त इति भाष्यार्थः । तत्रोत्पत्तिमात्रादेव लक्षणस्यातत्त्वव्यावृत्तिसिद्धौ स्थितिलयोपादानमाशङ्क्य निवृत्त्यर्थमित्याह **उत्पत्तिमात्रमिति** । उत्पादकत्वं निमित्तेऽपि दृष्टमित्युपादानत्वसिद्ध्यर्थं लयाश्रयत्वमुक्तमित्यर्थः । नन्वेवमपि लयाधारत्वादेवोपादानत्व लभ्यते न हि दण्डादिषु कुम्भादयो लीयन्ते इति स्थितिवैयर्थ्यम् । मैवम् । उपादानत्वमेव न कुलधर्मतयोक्तं किं तु प्रकृतिविकाराभेदन्यायेनाद्वैतसिद्ध्यै । तत्र च भवतु ब्रह्म जगत उपादानमधिष्ठाता तु उत्पत्तिस्थित्योरन्यः स्यात् कुम्भकार इव कुम्भस्योत्पत्तौ राजेव च राज्यस्य स्थितौ‡ सा शङ्क्येत्युत्पत्तिस्थितिग्रहणमिति । लक्षणस्य केवलव्यतिरेक्यनुमानादेव प्रतिज्ञातब्रह्मसिद्धेः शास्त्रयोनित्व¶समन्वयाधिकरण**योर्वैयर्थ्यमित्याशङ्क्याह **तदेतेनेति** । ब्रह्मजिज्ञासाय वेदान्तविचार आरभ्यत इति प्रतिज्ञायां विशेषणत्वेन ब्रह्म विषय इति प्रतिज्ञाविषयस्येत्युक्तम् । लक्षणं हि सिद्धस्य वस्तुनो भेदमवगमयति इदृशं

६६ । १०

६७ ।

,, । १

* मुकुटेति २-३ पु नास्ति ।  † कारणादुत्पत्त्यादिमिति १-२ पु पा ।

‡ लक्षणस्यातत्त्वात् व्यावृत्तीति ३ पु पा ।

§ लयाश्रयत्वमिति १ पु पा स्थितिलयाश्रयत्वमिति ३ पु पा ।
राज्यस्थितावपीति ३ पु पा ।  ¶ व्या सू अ १ पा १ सू ३ ।

** व्या सू अ १ पा १ सू ४ ।

तदिति तत्स्वरूपं वा न सताम् । कार्येण च कारणं किंचिदस्तीति मितम् । तत्त्वेकमनेकं वेति संदिग्धं तस्य यदैकत्वं सेत्स्यति तदा भवति तत्सर्वज्ञं सर्वशक्ति च नेतरथा । अयमेव संशयः कल्पनालाघवसंज्ञकतर्केणोत्कटैककोटिकतां नीतः सम्भावना समभवन्न निर्णयः । विचित्रप्रासादादीनां बहुकर्तृकत्वस्य

६१ । १४ प्रायेण दृष्टत्वात्तदिदमुक्तं **सम्भावनोक्तेति** । एवं च वक्ष्यमाणाधिकरणद्वयेन प्रमाणं वाच्यमित्यर्थः । एतदेवेति भाष्येण युक्तीनामासां सम्भावनाहेतुत्वं दृढीक्रियतइत्याह **इत्थं नामेति** । नैयायिकैरपि प्रमाणादमूषां भेदो नाश्रायि युक्तीनाम् । ततः स्तोकैवासां प्रमाणादूनतैवं च सम्भावयन्तितरामित्यर्थः । **सुहृद्भावेनेति** । उत्तराधिकरणारम्भात् प्राक् क्षणमपि शिष्याणामनुपपत्तिशङ्का मा भूदिति कृपयेत्यर्थः । अत्र नावेदविन्मनुते तं बृहन्तं नैषा तर्केण मतिरापनेयेत्यादिशास्त्रात्प्रागुक्तयुक्त्या च वेदैकगम्यं ब्रह्मेति समाधान-

„ । २३ इत्याह **परिहरतीति** । वाक्यार्थविचारणाशब्देन शाब्दबोध उपासनासहित उक्तः परस्तादवगतिरेवेति मध्ये ऽध्यवसानशब्दो न युक्त इत्याशङ्क्य नायं ज्ञानवचनः किं तु संस्कारसहितलयविक्षेपाविद्यासमाप्तिवचन इत्याह **सवासनेति** । वृत्तिरूपसाक्षात्कारस्याविद्याध्वंसिनो मध्ये विद्यमानत्वे ऽपि न सो ऽध्यवसानशब्देन गृहीतः । अविद्यानिवृत्त्या स्वरूपाभिव्यक्तिं प्रति व्यवधानादिति । विमतं चेतनपूर्वकं कार्यत्वादित्यादियुक्तिः शब्दाविरोधिनी वस्तुवशोपनिद्धारणे तदुपजीविनीति वक्तव्यम् । ब्रह्मात्मत्वस्य* केवलयुक्त्यगोचरत्वस्वाभाव्या†दित्याह **तदुपजीवि चेत्यपीति** । यथा हि किल गन्धारदेशेभ्य आनीय चौरैररण्ये कश्चिद्बद्धचक्षुः निहित आप्तोपदेशतस्तदुपदिष्टस्य साकल्येन न गृहीतत्वात्पण्डितः स्वयमूहापोहक्षमतया च मेधावी गन्धारान् प्राप्नोत्येवं परब्रह्मण आच्छिद्य विवेकदृष्टिं निरुध्याऽविद्यादिभिः संसारारण्ये निहितो जन्तुः परमकारुणिकगुरूपदेशतः स्वस्वभावं प्रतिपद्यतइति भाष्यस्थश्रुत्यर्थः । यदुक्तं ब्रह्मणो मानान्तराविषयत्वे कुतो मननमिति

६८ । ७ तत्राह **शब्दाविरोधिन्येति** । कारणस्य सर्वज्ञत्वादिसिद्धौ युक्तिः शब्दमुपजीवति न स्वतन्त्रा । कारणस्य तत्त्वं सम्भावयन्तीति‡कर्तव्यता न

---

* ब्रह्मात्मतत्त्वस्येति ३ पु॰ पा॰ ।

† युक्त्यगोचरस्वाभाव्यादिति १ पु॰ पा॰ । युक्त्यगोचरत्वादिति ३ पु॰ पा॰ ।

‡ कारणमात्रं तु सम्भावयन्तीति २ पु॰ । एवं शोधितं ३ पु॰ । कारणमात्रस्य तत्त्वं सम्भावयन्तीति ४ पु॰ ।

मानान्तरमित्यर्थः । भाष्यस्यानुभवशब्दार्थमाह **अन्तःकरणेति** । ननु कथं वृत्तिः प्रमाणमिति भाष्ये उक्तं निष्फलत्वादित्याशङ्क्य तत्कृताविद्यानिवृत्तिद्वारा स्वरूपाभिव्यक्तिरुपचारात्फलमस्तीत्याह **तस्येति** । धर्मजिज्ञासायां श्रुत्यादय एव प्रमाणमित्ययुक्तं वेदविषयश्रोत्रप्रत्यक्षाद्यपेक्षणादित्याशङ्क्य ज्ञातव्ये धर्मे न साक्षात्कारतदुपयोगियुक्त्यादीनां सम्भवो ब्रह्मजिज्ञासा तु साक्षात्कारपर्यन्तेत्याह **यद्यपीत्यादिना** । न केवलं ब्रह्मजिज्ञासायामनुभवादीनां सम्भवः किं तु तत्त्वसाक्षात्कारमन्तरेणापरोक्षसंसारभ्रमनिवृत्त्ययोगात्तेन विना न पर्यवसानं चेत्याह **अनुभवार्थेति** । ब्रह्मजिज्ञासायामिति ६८ । १६ सप्तम्यन्तं पदं षष्ठ्यन्तत्वेन विपरिणमय्यानुभवावसानत्वाद् ब्रह्मजिज्ञासाया इति भाष्ये योज्यम् । अनुभवोऽवसाने समाप्तौ फलत्वेन यस्याः सा तथोक्ता धर्मजिज्ञासायां त्वनुभवः कारणत्वेनोपक्रमे उपयुक्त इत्यर्थः । ब्रह्मानुभवः स्वरूपाभिव्यक्तिर्न वृत्तिः । तत्र हेतुमाह **परेति** । न वृत्तिरनित्यत्वाद्विचारस्य पुष्कलं फलमित्यर्थः । तदनुभव एव नित्यश्च वृत्तिरुक्ता एवकारेण तु तत्कृताविद्यानिवृत्तिद्वारेण स्वरूपाभिव्यक्तिरशक्यतेति सूचितम् । भाष्ये भूतशब्दः परमार्थवचनः । चशब्दः शङ्कानिवृत्त्यर्थः । व्यतिरिक्तः प्रपञ्चाभावोपलक्षितस्वरूपं तद्विषयसाक्षात्कारस्य विकल्परूपो ब्रह्मणा सह विषयविषयिभावरूपः सम्बन्धोऽस्ति न तु तत्त्वतः । उक्तं हीदं प्रथमसूत्रे वृत्तिविषयत्वमपि तथैवोपहितस्य न निरुपाधेरिति तत्र प्रस्मर्तव्यमित्यर्थः । अन्यथाकर्तुमित्यत्र कर्तुमित्यस्यानुषङ्गो भाष्ये कार्यः । करणापन्नत्वादन्यथाकरणस्य उदितहोमः कर्तुं शक्योऽनुदिते त्वन्यथेति तदाह **कर्तुमिति** । भाष्यस्थविध्यादिशब्दानुदाहृतवाक्येषु योजयति **गृह्णातीत्यादिना** । ६९ । ५ नारं स्पृष्ट्वाऽस्थि सस्नेहं सवासा जलमाविशेदिति नारास्थिस्पर्शनिषेधः ।

शिरःकपाली ध्वजवान् भिक्षाशी कर्म वेदयन् ।
ब्रह्महा द्वादशाब्दानि मितभुक् शुद्धिमाप्नुयात्[1] ॥

इति ब्रह्मघ्नः शवशिरसो नारस्य ध्वजत्वेन धारणाविधिः । भाष्ये प्रतिज्ञैव भाति न हेतुरत आह **एतदुक्तमिति** । स्वातन्त्र्येण कर्तुं समर्थोऽपि हिताहितोपायत्वमजानन् तद्बोधकविधिनिषेधापेक्ष इत्यर्थः ।

[1] याज्ञवल्क्यस्मृतिः अ. ३ श्लो. २४३ ।

१० । ४ अन्तःकरणजकल्पनाद्वैविध्यमाह **सवासनेति** । जाग्रद्वासनावासितं मन एव स्वप्नकारणं जाग्रत्संशयविपर्ययाः* संस्कारसहितान्तर्बहिःकरणजा इत्यर्थः । यथार्थस्तु च वस्त्वनुसारित्वं यासां नास्ति तास्तथोक्ताः । **न वस्त्विति** । संशया न विकल्पयन्ति विपर्यया नान्यथयन्तीत्यर्थः । खानि इन्द्रियाणि व्यतृणद्धिंसितवान् पराङ् पश्यति नेत्युक्तः । प्रत्यगात्मनस्त्वविषयत्वमिति अपरोक्षत्वात् प्रत्यगात्मप्रसिद्धिरित्यर्थेति । **उपरिष्टात्** तर्कपादे† । **उपपादितं चेति** । विमतं धीमत्कृतं कार्यत्वादित्यनुमानान्नेश्वरसिद्धिः । जीवजत्वेन सिद्धसाधनत्वात्तदुपकरणाद्यभिज्ञकर्तृकत्वसाधने कतिपयतदभिज्ञतायां सर्वज्ञासिद्धेः । सर्वतदभिज्ञकर्तृकत्वे सपक्षस्य साध्यहीनत्वात् । कुम्भं निर्मितवतः कुम्भकारस्य चेतःकार्यप्रतिषत्यनवबोधात्साधारणे ऽपि सिद्धसाधनत्वान्मनःसंयोगहीनस्य चोपलब्धेरभावादमनस्कस्याप्यैश्वर्यादुपलब्धिसम्भवे तत एव विनैवोपलब्ध्या जगन्निर्माणसम्भवेनोपलब्धिमत्कर्तृकत्वस्यैव विलोपेन वृद्धिं गृहीतो‡ मूलच्छेदादित्यादि न्यायकणिकायां व्युत्पादीति । **उपरिष्टात्** समन्वयसूत्रे । जन्माद्यस्य यतो वेत्यादिवाक्यं लक्ष्यमिति भाष्ये उक्तं तदर्थं श्रुतिसूत्रयोरर्थप्रत्यभिज्ञा दर्शयति **श्रुतिरिति** ।

अत्र स्वरूपलक्षणपरत्वं सूत्रस्य दर्शयितुं तस्य चेति भाष्यं तद्व्याचष्टे

११ । १८ **अत्र चेति** । जगद्विशेषणैः पूर्वनिर्णये ऽपि श्रुतिरिह निर्णीयते । कारणं ब्रह्मानूद्य वाक्येनानन्दत्वविधानात्स्वरूपलक्षणसिद्धिरानन्दः सत्यादिरूपलक्षणम् । नन्वानन्दादेर्भेदे न ब्रह्मलक्षणत्वम् । अभेदे वाक्यार्थासिद्धिः । गुणभूतपदार्थविशिष्टः प्रधानपदार्थो हि वाक्यार्थः । अत्रोच्यते । यत्र पदार्थः प्रमितः तत्र स एवेतरपदार्थविशिष्टः प्रतिपाद्यः । यस्त्वज्ञातः स नान्यैः शक्यो विशेष्टुमिति स एव वाक्येन प्रमेयः । प्रमिते चैतस्मिन् वाक्यस्य समाप्तेर्न विशिष्टपरत्वम् । यथा प्रकृष्टप्रकाशश्चन्द्र इति प्रकर्षप्रकाशद्वारा चन्द्रलक्षणान्न तद्वैशिष्ट्यं मानान्तरादेव तत्सिद्धेः । उपायस्तु वैशिष्ट्यम् अखण्डचन्द्रसिद्धौ । तच्चाविरोधाच्चन्द्रे ऽनुज्ञायते । सत्यादिवाक्ये त्वनन्ताद्यपदैर्बाध्यते वैशिष्ट्यम् । एवं च

---

* जाग्रत्स्वप्नविपर्ययासा इति १ पु० जाग्रत्स्वप्नविपर्ययणा इति ३ पु ।

† द्वितीयाध्यायद्वितीयपादे । ‡ ग्रहीत इति २ पु पा० । § एवशब्दो नास्ति २ पु० ।

अविशिष्टमपर्यायानेकशब्दप्रकाशितम् ।
एकं वेदान्तनिष्णाता अखण्डं प्रतिपेदिरे ॥

ननु चन्द्रलक्षणमिदं ततश्चन्द्र इतरस्माद्भिद्यते चन्द्रशब्देन व्यवहर्तव्यो वा प्रकृष्टप्रकाशत्वाद्व्यतिरेकेण तमोवदिति व्यावृत्तिविशिष्टस्य वाच्यत्वविशिष्टस्य च वाक्येन प्रतिपाद्यत्वमिति । तन्न । अप्रमिते चन्द्रे व्यावृत्तेरनवबोधात् प्रमिते ऽपि प्रमाणान्तरात् प्रमितिर्लक्षणवाक्याद्वा । प्रथमे सामान्यतः प्रमितिर्विशेषतो वा । नाद्यः । सामान्यस्यैव व्यावृत्तिसिद्धौ चन्द्रस्य तदसिद्धिप्रसङ्गात् । न चरमः । विशेषप्रमाणादेव व्यावृत्तिसिद्धौ लक्षणवैफल्यात् । न द्वितीयः । लक्षणवाक्याच्चन्द्रप्रमितौ तस्य तत्रैव पर्यवसाने व्यावृत्तिपरत्वानुपपत्तेः । न च चन्द्रशब्दवाच्यत्वं साध्यते अचन्द्रे चन्द्रशब्दवाच्यत्वसाधने व्याघातात् । अथ चन्द्रत्वमप्यभिप्रेत्य चन्द्रशब्दवाच्यत्वं साध्यते तर्हि चन्द्रत्वमेव साध्यतामवश्यापेक्षितत्वात्कृतमश्रुतवाच्यत्वकल्पनया । तस्मात्प्रकृष्टत्वे सति प्रकाशत्वमज्ञातचन्द्रज्ञापकम् । अर्थाद्व्यावृत्त्यादिसिद्धिः । एवं चैतद्रूपास्तम् एकेन पदेन यावदुक्तं तावतो ऽपरेणाभिधाने पर्यायत्वमधिकाभिधाने विशिष्टवाक्यार्थत्वमपि नास्ति । वाक्यार्थनानात्वस्यादृष्टत्वाल्लक्ष्यस्य चैकत्वात् । न हि चन्द्रद्वयमस्ति न च लक्षणस्य विशिष्टत्वाल्लक्ष्यं विशिष्टं स्यात् । न हि भवति सामान्यवाचकस्य सत्यसङ्कल्पादिशब्दपराहत्वं विशिष्टमित्यनित्यत्वमपि विशिष्टं तर्हि अनित्यत्वस्यैव लक्षणानात्मकत्वाल्लक्ष्यस्य ब्रह्मणः सत्यादौ सकत्वं न स्यादिति चेन्नैतदस्ति । यतः

सत्तादीनां हि जातीनां व्यक्तानामस्यादर्शनात् ।
लक्ष्यव्यक्तेरपि ब्रह्म सत्त्वादि न जहाति नः ॥

इह हि कल्पितभेदव्यक्त्याश्रितैः सामान्यैर्या व्यक्तयो लक्ष्यन्ते तास्तद्रूपत्वं न जहति तद्वच्चन्द्रानुगतचन्द्रत्वेन लक्ष्यचन्द्रव्यक्तिरिव चन्द्रात्मत्वमेवं ब्रह्मापि मायाकार्यकुम्भादिकल्पितव्यक्त्यनुगतया सत्तया लक्ष्यमाणं सत्त्वं न हास्यति । तथा ज्ञानत्वानन्दत्वाभ्यामप्यन्तःकरणवृत्त्युपधानलब्धभेदचिदानन्दविशेषानुगताभ्यां लक्ष्यमाणचिदानन्दव्यक्त्योरपि योज्यम् । यथा च सद्भेद औपाधिक एवं सज्ज्ञानानन्दभेदोऽपि तत्त्वरहितज्ञाना-

[1] सा हि भूरिति ३-४ पु० पा ।

नन्दयोः शून्यत्वप्रसङ्गाद्बोधात्मत्वरहितसतश्च भानाभावप्रसङ्गाद् दृश्यत्वे कल्पितत्वेन सत्त्वायोगात्सद्बोधात्मकसाक्षिणश्च परप्रेमास्पदत्वेनानन्दस्वाभाव्यावगमादिति । तथा च कल्पितभेदसामान्यतदपेक्षव्यक्त्याकारबाधेन सत्यज्ञानानन्दात्मकं ब्रह्म निश्चीयते । प्रयोगो ऽपि सत्यादिवाक्यं विशिष्टार्थपरत्वरहितं लक्षणवाक्यत्वात्प्रकृष्टप्रकाशादिवाक्यवदिति । तथा ।

उपाधिभेदभिन्नो ऽर्थो येनैकः प्रतिपाद्यते ।
तदपि स्यादखण्डार्थं महत्त्वं कुम्भखं यथा ॥

निरंशस्य हि जीवस्याणुत्वमनन्तत्वं वा स्यात् तत्र नाणुत्वं सकलदेहव्यापिह्लादानुपलम्भप्रसङ्गाद् विभोश्च न नभोवद् द्रव्यत्वावान्तरजात्यनाधारस्येश्वराद्भेदायोगात् । तस्मादनन्तब्रह्मात्मनो ऽस्य परिच्छेद औपाधिकः । श्रूयते च जीवस्य परस्मादौपाधिको भेदः

यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैको ऽनुगच्छन् ।
उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजो ऽयमात्मा ॥ इति ।

नन्वेवंभूतब्रह्मणः कथं जगद्योनित्वमत आह **एतदिति**[1] ।

१२ । १ **शास्त्रयोनित्वात् ॥ ३ ॥**

अत्र हेतुमात्रं प्रति[2]भाति नैतज्जगद्योनित्वे साध्याविशेषादित्यसङ्गतिमाशङ्क्यार्थिकप्रतिज्ञया सङ्गतिमाहेत्याह **सूत्रान्तरमिति** ।

अथ वा वेदनित्यत्वाद् ब्रह्मणो विश्वयोनिता ।
नेति शङ्कामपाकर्तुं शास्त्रयोनित्वमुच्यते ॥

अस्मिन्पक्षे श्रौतप्रतिज्ञयैव सङ्गतिः । अभ्युच्चयार्थत्वेन हेतुपौनरुक्त्यं परिहरति **न केवलमिति** । हेत्वन्तरसमर्थनाच्चाधिकरणान्तरत्वम् । अस्य महत इत्यादिवाक्यं ब्रह्मणो वेदकर्तृत्वेन सर्वज्ञत्वं न साधयत्युत साधयतीति वेदस्य सापेक्षत्वप्रसङ्गाऽप्रसङ्गाभ्यां संशये पूर्वपक्षमाशङ्क्य निराकरिष्यते । सिद्धान्तोपक्रमभाष्यं व्याचष्टे **चातुर्वर्ण्येत्यादिना** । पुराणन्यायमीमांसा धर्मशास्त्रं षडङ्गानि दश विद्यास्थानानि । **तया तया द्वारेति** । सृष्टिवाक्यापेक्षितसर्गादिप्रपञ्चनद्वारा पुराणमद्वैतपरं जातिव्यक्तिलक्षणनिरूप-

[1] अत्र द्वितीयं जन्माद्यधिकरणं समाप्तम् । तत्र **जन्माद्यस्य यतः** २ इत्येकं सूत्रम् ।
[2] प्रतिशब्दो नास्ति २ पु ।

णेन न्यायो वैदिकपदार्थशुद्ध्यर्थः शेषोपयोगस्तु व्यक्तः । उक्तमर्थं प्रमाण-
यतीति । अत्रायं* भाष्यविभागः । महत इत्यारभ्य ब्रह्मेत्यन्तेन निःश्व-
सितश्रुत्या विभुत्वहेतूपकृतया ब्रह्मकार्यं वेद इत्युक्तम् । न हीदृशस्येत्या-
रभ्यास्तीत्यन्तेन व्यतिरेकमुखेन सर्वज्ञत्वप्रतिज्ञा । यदित्यादिना लोके
इत्यन्तेन व्याप्तिरुक्तेति । विस्तरत्वं शास्त्रविशेषणं व्याप्त्यनुपयोगाद् व्यर्थ-
मित्याशङ्क्य महाविषयत्वाद्वेदस्य ब्रह्मज्ञानेन तुल्यविषयत्वभ्रमनिवृत्तिः प्रयो-
जनमित्याह **विस्तरार्थमिति** । यस्मादित्यस्य तस्येत्यनेन व्यवहितेन
संबन्धमाह **वेदस्येति** । इदमिहानुमानम् । ब्रह्म वेदविषयादधिकविषयज्ञं  ७३ । ९
तत्कर्तृत्वात् यो यद्वाक्यप्रमाणकर्ता स तद्विषयादधिकविषयज्ञो यथा पाणि-
निरिति । सर्वावभासकवेदकर्तृत्वेन पक्षधर्मताबलात्सर्वज्ञत्वसिद्धिरिति ।
यद्वा ऽयं घट एतदन्यासर्ववित्कर्तृकत्वानधिकरणैतदन्यावेदत्वानधिकर-
णसकर्तृकान्यः घटत्वाद् घटान्तरवदिति । ईक्षणादिप्रयत्नापेक्षणादप्रयत्नशब्दः
सौकर्यापेक्ष इत्याह **ईषदिति** । अधुना पूर्वपक्षम् आशङ्क्य निराक्रियते ।
कर्तृमत्त्वेन वेदस्य सापेक्षत्व वदन् प्रष्टव्यः । सापेक्षता किं पुरुषनिर्वर्त्यत्व-
मात्रादभिनवानुपूर्वीविरचनाद्वा मानान्तरोपलब्धार्थविषयवचनरचनाद्वा कति-
पयकालविरचित† सर्वसंप्रदायस्य वेदस्यैकपुरुषान्निःसरणाद्वा । नाद्यस्त्वयापि
संमतत्वादित्याह **य ऽपि नावदिति** । व्यक्तिरभिव्यक्तिः । द्वितीये
क्रमान्यत्वमात्रमभिनवत्वं विसदृशक्रमत्वं वा । आद्यो मयाप्यङ्गीकृतः ।
चरमस्तु नास्माभिरपि स्वीकृत इत्याह **तस्मान्नृत्तेति** । तृतीयस्त्वनभ्यु-
पगमनिरस्त इत्याह **वैयासिकं त्विति** । अनुवर्तमाना आचक्षत इत्यनु-
षङ्गः । ननु विवर्तत्वे वेदान्तानां यादृच्छिकत्वात्तन्न क्रमनियमः स्यात-
त्राह **यथा हीति** । सर्वज्ञस्य सर्वशक्तेर्ब्रह्मणो नोपाध्यायवत् क्रमानुरोधो
युक्त इति । तत्राह **यथात्रेति** ।  ७४ । १०

मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तदर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतो ऽपराधात्‡ ॥

इति श्रूयते ।

* अत्रेति नास्ति २ पु । † कालरचितं इति २ पु ।
‡ पाणिनीयशिक्षायाम् ।

घनुर्थं निराकरोति **न चैकस्येति**। सर्वदा संप्रदाया*विच्छेदमि-
च्छद्भिरपि संप्रदायप्रवर्तकेष्वाश्वास आस्थेयः स वरमेकस्मिन्नेव ब्रह्मण्यवग-
तमाविक्ये कृत इति भावः। ननु न वयमीश्वरं पश्यामः कथं तत्कर्तृके
१५। ५ वेदे विश्वासस्तत्राह **सर्गादिभुवामिति**।

वेदान्ता ब्रह्मणि प्रमाणं न वेति सिद्धवस्तुबोधात्फलभावाभावाभ्यां
सिद्धं रूपादिहीनं वस्तु बोधयतो वाक्यस्य मानान्तरसापेक्षत्वाऽनपेक्षत्वाभ्यां वा
संशये पूर्वाधिकरणाद्द्वितीयवर्णकेनाक्षेपिकीं सङ्गतिम् उक्त्वा पूर्वपक्षभाष्यं व्या-
चष्टे **किमाक्षेपइत्यादिना**। कथमिति थमुप्रत्ययान्तः किंशब्द आक्षेपे।
जैमिनिसूत्रोपन्यासो न व्युत्थितसिद्धान्तिविश्रम्भायापि तु दृढपूर्वपक्षनिरासार्थं
सिद्धान्तावष्टम्भायेत्याह **पारमर्षेति**। अभिधेयाभावो ऽनुभवविरोधान्न
युक्तो वक्तुमित्याह **आनर्थक्यं चेति**। भाष्ये पौनरुक्त्यमाशङ्क्य संग्रहवि-
वरणात्वमाह **अत इत्यादीति**। **वात्तमिति**। उपासनादिक्रियान्तरवि-
धानार्थत्वं वेत्येतदन्तमित्यर्थः। ननु किमिति वेदान्तानामर्थवादवद्विधि-
पदैकवाक्यता मन्त्रवत्कार्यगर्थ्यमस्त्वित्याशङ्क्य तर्हि तद्वद्विधिभिर्वाक्यैकवा-
क्यता स्यादित्याह भाष्यकारो **मन्त्राणां चेति**।

इषे त्वेत्यत्र छिनद्मी†त्यध्याहाराच्छाखाच्छेदः‡ क्रिया भाति क्व चिन्नाऽऽ§
ग्निर्मूर्द्धेत्यादौ तत्साधनं देवतादीति। मन्त्राश्च श्रुत्यादिभिः क्रतौ विनि-
युक्ताः। ते किमुच्चारणमात्रेणादृष्टं कुर्वन्तः क्रतावुपकुर्वन्त्युत दृष्टेनैवार्थ-
प्रकाशनेनेति संशयः। तत्र न तावद् दृष्टार्थत्वमेव मन्त्राणां शक्यं वक्तुमुपाया-
न्तरेणापि मन्त्रार्थस्य स्वाध्यायकालावगतस्य चिन्तादिना प्रयोगसमये स्मृति-
सम्भवात्तावन्मात्रार्थत्वे मन्त्राणां नित्यवदाम्नानवैयर्थ्यात्। अथ तु मन्त्रै-
रेवा||र्थप्रत्यायननियमाददृष्टं कल्प्यते तदुच्चारणादेव कल्प्यतां तस्य पुंव्या-
पारगोचरत्वात्स्वव्यापारे च पुरुषस्य नियोगात्तत्र च फलाकाङ्क्षणादिति
प्रापय्य प्रमाणलक्षणे राद्धान्तितम्।

* सर्वसंप्रदायेति १ पु. । सर्वथासप्रदायेति २ पु. पाठः ।
† शाखां छिनद्मीति १ पु. पाठः । ३ पु. तै. पु. च एवमेवासीत्परमुपरितनः पाठस्तत्र शोधितः ।
‡ शाखाभेद इति १ पु. पा. ।
§ क्व चित् क्व चिच्चेति २ पु. पा. ।
|| अन्यनुमन्त्रैरेवेति पाठः २ पु.

यस्य दृष्टं न लभ्येत तस्यादृष्टप्रकल्पना ।
लभ्यते ऽर्थस्मृतिर्दृष्टा मन्त्रोच्चारणतस्त्विह ॥
अर्थस्मृतिः प्रयोगार्था प्रयोगाच्च फलोदयः ।
इति दृष्टार्थसम्पत्तौ नादृष्टमिह कल्प्यते ॥

यस्तु मन्त्रैव स्मर्तव्यमिति नियमस्तस्य न किंचिद्दृष्टमस्तीत्यदृष्टं कल्प्यते । तस्माद्दृष्टादृष्टार्था मन्त्रा* इति । **उत्पत्तिविधेरिति** । अधिका- १६ । ११ रविधित प्रवृत्तिलाभादुत्पत्तिविधिरज्ञातकर्मस्वरूपबोधपर इत्यर्थः । **अना-गतेति** । भावो भावना तद्विषयः सर्वो विधिः । यतः स उत्पाद्य उत्पा-दात्वे हेतुरनागतत्वम् । अधिकारः फलसम्बन्धबोधनम् । विनियोगो ऽङ्ग क्रियायाः फलशेषत्वज्ञापनम् । प्रयोगो ऽनुष्ठापनम् । कर्मस्वरूपज्ञान-मुत्पत्तिः । फलसम्बन्धः क्रियाया न शेषत्वमन्तरेण तच्च नानुष्ठानं विना अनुष्ठानं च नाज्ञाते इत्यपि भावः । सिद्धं चेत्पुंव्यापारानपेक्षं फलमार-भेत सदा ऽऽरभेतेति नाधिकारादिसम्भव इत्यर्थः । सर्वेषामविनाभावे सर्वत्र चातूरूप्यमस्तीति कथमवान्तरभेदस्तत्राह **तद्वाक्यानां त्विति** । उप-संहरति । **यथेति** । सर्वविधिपूत्पत्त्यादयः प्रतीयन्ते अग्निहोत्रं जुहुयादि-त्यत्राप्यग्निहोत्रेणेष्टं भावयेदित्यर्थो न त्वग्निहोत्रस्य भाव्यत्वमफलत्वात् । न चाग्निहोत्रस्वरूपमतो बोध्यम् अभूद्भवति भविष्यतीत्यापत्तौ विध्युपगमा-तापातात् । तस्मादधिकारविधितः प्रागविनियोगादनुवादेनोत्पत्तिविधिः स्वरूपपरो भवति । ब्रह्मणि तु भावनाभावादनुवादस्यापि विनियोगादेर-भावान्नोत्पत्तिविधिरित्याह **तस्मादिति** । विधिपरत्वे वेदान्तानां न केवल-मनुवादत्वाभावो ऽपि तु विपरीतार्थत्वं च न स्यात् पक्षान्तरे तु स्यादि-त्याह **एवं चेति** । **यादृशमिति** । जीवाद्भिन्नमित्यर्थः । जीवे ब्रह्म-दृष्ट्यारोपात्तु भेदग्राहिप्रमाणविरोध इत्यर्थः । **तदिति** । सूत्रपदोक्तां सिद्धा-न्तपक्षप्रतिज्ञाम् इत्यर्थः‡ ॥

## तत्तु समन्वयात् ॥ ४ ॥ ११ । ४

**सम्यगन्वय इति** । तात्पर्यं सम्यक्त्वम् । ननु शास्त्रयोनित्व-द्वितीयवर्णकाक्षेपसमाधानरूपमिदमधिकरणं तत्र च यतो वेति वाक्यमुदाहृ-

* दृष्टार्था मन्त्रा इति ८-३ प॰ पा॰ । † उदाहरतीति ५ पु पा ।

‡ अत्र तृतीयं शास्त्रयोनित्वाधिकरणं समाप्तम् । तत्र शास्त्रयोनित्वात् ३ इत्येकं सूत्रम् ।

तमिह क्रिमिति तदुपेक्षितमत आह एतेनेति । तद् ब्रह्म सर्वज्ञमि-
त्यादिभाष्ये एत इत्यादिवाक्यप्रमेयकीर्तनेनानन्तु प्रमाणं बुद्धिस्थं भवतीति
नोदाहृतमित्यर्थः । वेदान्तानां ब्रह्मात्मैकत्वे उपक्रमोपसंहारैक्यं तात्पर्य-
११ । १३ लिङ्गं सदृष्टान्तमाह येनेति ।

भेदलक्षणे चिन्तितम्*—पौर्णमासीवदुपांशुयाजः स्यात्† । जामि
वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ उपांशुयाजमन्तरा यजति
विष्णुरुपांशु यष्टव्यो ऽजामित्वाय प्रजापतिरुपांशु यष्टव्यो ऽजामि-
त्वायाग्नीषोमावुपांशु यष्टव्यावजामित्वायेति श्रूयते । तत्रोपांशुयाजम-
न्तरा यजतीति किं समुदायानुवाद उतापूर्वयागविधिरिति विशये यथा
ऽऽग्नेयादियागानां य एवं विद्वान् पौर्णमासीं यजते य एवं विद्वानमा-
वास्यां यजतइति समुदायानुवादो । एवमिदमपि विष्णवादिवाक्यविहित-
यागानां समुदायानुवादः । तत्र हि विष्णवाद्या देवताः श्रूयन्ते । सर्वस्मै
वा एतद्यज्ञाय गृह्यते यद् ध्रुवायामाज्यमिति ध्रौवाज्यद्रव्यसिद्धिः । तव्यप्र-
त्ययाश्च विधायकाः श्रूयन्ते । न त्वन्तरावाक्ये ऽस्ति द्रव्यदैवतं रूपम्
यजतीति च वर्तमानापदेशः । तदुक्तम् ।

यागान् विष्णवादिसंयुक्तान् विहितान् रूपवत्तया ।
अरूपमन्तरावाक्यमगत्यैवावलम्बते ॥

,, । १५ इति पूर्वपक्षः । एतदधिकरणसिद्धान्तमाह अनूचारिति । निरन्त-
रयोराग्नेयाग्नीषोमीययोः पुरोडाशयोः करणे आलस्यं स्यादिति दोषं सङ्कीर्त्य
तदपनयनार्थ‡मुपांशुयाजमाज्यद्रव्यकं विधायानन्तरमजामित्वायेति तद्वि-
धानलब्धं जामितादोषसमाधानमुपसंहरति । अतः सार्थवादोपक्रमोपसंहा-
रैकरूप्याद् एकमिदं वाक्यम् एकवाक्यता चोपांशुयाजविधौ लभ्यते नेतर-
थानेकयागविधाविति । ननु तव्य§विहितयागानां समुदायानुवादो ऽयमिति
तत्राह अपूर्वेति । तथाहि । यष्टव्य इति कर्मप्राधान्यं विष्णवादिवाक्ये

* स्थितमिति २ पु॰ पा ।
† जै सू अ २ पा॰ २ सू ९ ।
‡ तदपनयार्थमिति २ पु पा ।
§ तव्यप्रत्ययेति २ पु॰ पा॰ ।

प्रतीयते यागस्तूपसर्जनम् । तत्र कर्मत्वमप्रधानीकृत्य यागप्राधान्यं लक्षणीयं कर्मतया च देवतात्वं ततो गुरुतरा कल्पना । अन्तरावाक्ये तु श्रुत यागप्राधान्यं विधिश्च पञ्चमलकारकृप: । यत्तु रूपाभाव इति तन्न । धीवाज्यत्वाभावात् । आग्नेयादीन्यागान् क्रमेणाम्नाय मन्त्रकाण्डे तत्क्रमेणैव याज्यानुवाक्या आम्नातास्तत्रोपांशुयाजस्थाने वैष्णवप्राजापत्याग्नीषोमीयास्तिस्रः ऋचः[1] पठ्यन्ते । ताभिस्तुल्यार्थत्वेन विकल्पमानाभिर्विष्णवादिदेवतानां समर्पितत्वात् । तस्मादपूर्वं उपांशुयाजो विधेयः । विष्णवादिवाक्यानि त्वर्थवादाः । इत्थ महोयानुपांशुयाजो यदस्मिन्विष्णवादयो यष्टव्या इति ।

**एवं वाक्यान्तराणामिति** । ऐतरेयके आत्मा वा इदमेक एवेत्युपक्रम्य ७१ । १९ स एतमेव पुरुषं ब्रह्म ततमपश्यदिति तमेव ब्रह्मात्मानमभिधाय समाप्तौ प्रज्ञानं ब्रह्मेत्युपसंहृतम् । वाजसनेयके ऽयमहं ब्रह्मास्मीत्युपक्रम्यायमात्मा ब्रह्मेत्युपसंहृतम् । आथर्वणे कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति सर्वात्मकं ब्रह्मोपक्रम्य ब्रह्मैवेदममृतं पुरस्तादिति तदेव निगमितम् । वेदान्ता यदि सिद्धवस्तुपरास्तर्हि मानान्तरसापेक्षाः स्युः पुंवाक्यवदिति पूर्ववाद्यभिमतस्य प्रसङ्गस्येतः पौरुषेयत्वेन सोपाधिकत्वे साध्यगतापिगत्वेन दोऽन्यतरत्याह **अपरमभिसन्धिरिति** । तस्यैवानैकान्तिकत्वमाह **प्रत्यक्षादीनामपीति** । वाक्यस्य सतः सिद्धवस्तुपरत्वे पौरुषेयत्वापत्तिरिति साधनव्याप्तिमुपाधिः शङ्कते **यद्युच्येतेति** । वाक्यत्वादि लिङ्गं यस्य स तथा । कार्यपरतायां हि वेदान्तानां न वाक्यत्वादिना सापेक्षत्वमनुमेयं पौरुषेयत्वस्योपाधित्वा...त्र न च साधनव्याप्तिरित्याह **कार्यार्थत्वइति** । तत्त्वेन याथात्म्येनाकार्यं मानान्तरयोग्यत्वस्यासिद्धत्वात्तत्परत्वे ऽपि वेदान्तानां पौरुषेयत्वं सम्भवतीति समा साधनव्याप्तिः सतश्च दूषणाद् वाक्यत्वादिलिङ्गकं पौरुषेयत्वमित्याशयेनाह **अत्र ब्रूम इत्यादिना**[2] । **किं पुनरिति** । कृतियोग्यस्य कार्यत्वे भावार्थस्यापि तत्त्वेन मानान्तरयोग्यत्वमित्यर्थः । तद्यन्लौकिकं कार्यमिति शङ्कते **अपूर्वमिति** । तर्हि मानान्तरा १८ । २१ ऽनवगते सङ्गतिग्रहाऽयोगाल्लिङादीनामबोधकत्वापात इत्याह **हन्तेति** ।

[1] ऋच इति नास्ति २ पु० ।

[2] ब्रूम इतीति २ पु० पा० ।

पदानि तानि सति वेदाविरोधसम्भवे तदर्थान्येव सूत्रेष्वित्यवगन्तव्य-मिति ।

परागप्यपीति भाष्ये येषु सूत्रेषु व्याख्या ऽतिदिष्टा तान्यल्पवक्तव्यत्वा-त्प्रथमं योजयति यत्सत्यमिति । तद्धेतुव्यपदेशाच्चेति[*] सूत्रव्याख्यानपरमधि-करणसमाप्तिभाष्यं व्याख्याति **विकारजातस्येति**[†] । अवयवश्चेत् कथं कारणमुच्येत[‡] । तत्र हेतुमाह **न हीति** । आनन्दमयस्यात्रद्विकारस्तदव-यवो ब्रह्मापि विकारः स्यात्परिच्छिन्नत्वात् तथाभूतं सन्न विश्वहेतुरित्यर्थः । चिन्ताप्रयोजनमाह **तस्मादिति** । आनन्दमयविकारस्यावयवो ब्रह्मेति कृत्वेत्यर्थः । तेन ब्रह्मणा ऽवयवेन योगो यस्य स तथोक्तः[§] ॥

१४० । १७ **अन्तस्तद्धर्मोपदेशात् ॥ २० ॥**

निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः ।
ये मन्दास्ते ऽनुकम्प्यन्ते सविशेषनिरूपणैः ॥
वशीकृते मनस्येषां सगुणब्रह्मशीलनात् ।
तदेवाविर्भवेत् साक्षादपेतोपाधिकल्पनम् ॥

समन्वयस्य सविशेषपरत्वमपोद्यानन्दमयाधिकरणउत्सर्गः स्था-पितः । इदानीमपवादचिन्तार्थत्वेनाधिकरणमवतारयन् प्रघट्टकसङ्गतिमाह **पूर्वस्मिन्निति** । यद्यप्यपवादापवादत्वात् पुच्छब्रह्मचिन्ता प्रागद्वैतविचार-संनिधौ कर्तुं युक्ता तथाप्यवान्तरसङ्गतिमालोच्य कामाच्च नानुमानापेक्षे[||]ति प्रधाननिरासस्यैवत्यधिकरणा[¶]नन्तरं बुद्धिस्थतां चापेक्ष्य प्रथमं कृता । आदि-त्यपदवेदनीयो जीव उपास्यत्वेन न तूपदिश्यतइत्यनुषङ्गः । इह रूपवत्त्वस-र्वपापविरहाभ्यां संशये पूर्वत्र मुख्यचितयाख्यबहुप्रमाणानुसारान्निर्विशेषनि-र्णयवद् रूपवत्त्वादिबहुप्रमाणवशात्संसारी हिरण्मयः पुरुष इत्यवान्तरसङ्ग-

---

[*] व्या. सू. अ. १ पा. १ सू. १४ ।
[†] एतदग्रे-अवयवो यदीति शेष-इति २ पु. अधिकम् ।
[‡] उच्यते इति २ पु. पा. ।
[§] अत्र षष्ठमानन्दमयाधिकरणं संपूर्णम् । तत्र सूत्राणि ८-आनन्दमयो ऽभ्यासात् १२ विकारशब्दान्नेति चेन्न प्राचुर्यात् १३ तद्धेतुव्यपदेशाच्च १४ नेतरो ऽनुपपत्तेः १५ मान्त्रवर्णिकमेव च गीयते १६ भेदव्यपदेशाच्च १७ कामाच्च नानुमानापेक्षा १८ तस्मिन्नस्य च तद्योगं शास्ति १९ ॥
[||] व्या. सू. अ. १ पा. १ सू. १८ ।
[¶] व्या. सू. अ. १ पा. १ सू. ५ ।

तिमभिप्रेत्य पूर्वपक्षं सङ्कलयति **मर्यादेति** । सर्वपाप्मविरहस्यान्यथासिद्धि- १४१ । ३
माह **कर्मेति** ।

इन्द्रस्य वृत्रवधेन ब्रह्महत्याश्रवणादस्ति देवानां कर्माधिकार इति भारतीविलासः । तन्न । गवां सत्रासनश्रवणात् तेषामप्यधिकारप्रसङ्गात् । असम्भवस्तूभयत्र तुल्यः । न ह्यैन्द्रे दधनि इन्द्रस्याधिकारसम्भवः । न च निषेधाधिकारो न ह वै देवा न्यायं गच्छन्तीति श्रुतेः । अथ प्राक्कृतस्यैव पापस्य फलानारम्भकत्वमेतच्छ्रुत्यर्थः तर्हि तदेव पाप्मोदयस्यालम्बनमस्तु कर्मानधिकृतत्वोक्तेः त*त्प्रदर्शनार्थत्वादिति । अमुष्मादादित्यात्पराञ्चः । न ह्यनाधारस्येति भाष्यं व्याचष्टे **अनाधारत्वे चेति** । **नित्यत्वमिति** स्वमहिमप्रतिष्ठितत्वस्य व्याख्या । कथं नित्यत्वेनाऽनाधारत्वसिद्धिरित्यत आह **अनित्यं हीति** । तर्हि तत एवानाधारत्वसिद्धेः किं सर्वगतत्वेनात आह **नित्यमपीति** । नित्यमपि असर्वगतं चेतन्न भवत्याधाररहितं यतो यद्व- ,, । १९
स्तु तस्मान्नित्यादधरभावेनावस्थितं तदेव तस्य नित्यस्यो|परिस्थितस्या-धारो भवति तस्मात्सर्वगतत्वमपि नित्यत्वविशेषणत्वेनानाधारत्वे हेतुर्व-क्तव्य इत्यर्थः । सर्वात्मत्वसर्वदुरितविरहयोः रूपवत्त्वादिभ्यः किं बलमत आह **अव्यभिचारिभ्यामिति** । न ब्रह्मणोऽन्यत्र तयोः सम्भव इत्यर्थः । ब्रह्मणि सर्वात्मत्वसम्भवमाह **सर्वेति** । रूपवत्त्वादेर्ब्रह्मण्यपि संभवाद्व्यभिचारमाह **विकारवादिति** । कार्योपहितमित्यर्थः । सर्वदुरितविरहमुदाहृत-वाक्येनापि‡ प्रमिमीते **नामेति** । पाप्मभ्य इति अपादाने पञ्चमी । ततः सर्वे पाप्मानोऽपादानं यस्योदयस्य तस्य भावस्तत्ता तद्रूपेणोदय उद्गम उच्यत इति । रूपवत्त्वं तादृशेन रूपविशेषेणोपदिश्यत इत्यन्वयः । ननु हिर-ण्मयत्वं कथं तद्धि शरीरस्यात आह **विकारस्य चेति** । नन्वविकारि- १४२ । १०
ब्रह्मणो मायामयं रूपं वक्तव्यं ततश्च मिथ्यार्थप्रकाशकतया शास्त्राऽप्रामाण्य-मत आह **न चेति** । यथा लोके मायाविदर्शित§मायानुवादिवाक्यं प्रमा-णमेवं शास्त्रमपि । अप्रामाण्यं तर्हि कदा स्यादत आह **अपि त्विति** ।

* तर्हीति नास्ति २ पु· ।　　† नित्यस्येति नास्ति ३ पु·

‡ अपिशब्दो नास्ति २ पु· ।　　§ प्रदर्शितेति ३ पु पा· ।

मायां *मिथ्याबुद्धिं कुर्वदशास्त्रं स्याद् न तु तां करोति तस्याः प्रागेव सिद्धत्वादित्यर्थः । विभूतिमत्त्वेवेश्वरावस्थाने सार्वात्म्यविरोधमाशङ्क्याभिव्यक्तिमात्रं तत्र सत्ता तु सर्वत्रेत्याह **सर्वेति** । लोक†कामेशितृत्वश्रवणादेव मनुष्यैरीश्वराज्ञां विना ऽशितुमपि न शक्यमित्यन्तः पारार्थ्यन्यायः । सैवर्क् तत् सामेति । तच्छब्दैश्चाक्षुषपुरुष‡परामर्शः । ऋगादिविधेयापेक्षया स्त्रीलिङ्गनिर्देशः§ । उक्थं शस्त्रविशेषः । तत्साहचर्यात्सामस्तोत्रं ऋगुक्थादन्यच्छस्त्रं ब्रह्म त्रयो वेदाः पृथिव्यग्न्याद्यात्मके चेत्यादिभाष्यम् । तत्र ऋगधिदैवं पृथिव्यन्तरिक्षद्युनक्षत्रादित्यगतशुक्लभारूपा साम चाग्निवाय्वादित्यचन्द्रमआदित्यगतपरः कृष्णाख्यमतिकृष्ण॥रूपात्मकमाम्नातमियमेवाग्निः सामेत्यादिना । अध्यात्मं च ऋग्वाक्चक्षुःश्रोत्रादिगतशुक्लभालक्षणा तावदुक्ता¶ । साम च प्राणच्छायात्ममनोऽक्षिस्थकृष्णभारूप**माम्नातम् वागेवर्क् प्राणः सामेत्यादिना । एवमात्मके ऋक्सामे तस्य गेष्णौ पर्वणी†† ॥

,, । ११

**आकाशस्तल्लिङ्गात् ॥ २२ ॥**

लिङ्गाद् ब्रह्मनिर्णयस्य तुल्यत्वात्पुनरुक्तिमाशङ्क्याह **पूर्वस्मिन्निति** । श्रुतिप्राप्तनभसो लिङ्गेन बाधार्थो न्यायो ऽधिक इत्यर्थः । इदमुक्तं **न भूताकाश उपास्यत्वेनेति** । यद्यप्यस्मिन्ग्रन्थे पूर्वत्र सोपाधिकब्रह्मण उपास्तिचिन्ता ऽत्र तु तस्योद्गीथे संपत्तिचिन्तेति विशेषप्रदर्शनं भाति तथापि न तथा ऽर्थो ग्राह्यः । हिरण्मयवाक्ये ऽपि तस्मादुद्गीथ इत्युद्गीथसंपत्तेस्तुल्यत्वात् । तस्मादेतदपि असाधारणधर्मवतः तुल्य‡‡मेवानूदितम् । आकाशशब्दो नभःपर उत ब्रह्मपर इति रूढिनिरूढप्रयोगाभ्यां विशये पूर्वत्राव्यभिचारिलिङ्गादन्यथासिद्धिरूपवत्त्वादि नीतमियं तु श्रुतिर्लिङ्गान्नान्यथयितव्येति प्रत्युदाहरणलक्षणसंगतिः । प्रधानत्वहेतुं व्याचष्टे **अस्येति** । तद्दानुगुण्येनेत्येतद्विवृणोति **सर्वाणीति** । प्रथमत्वे हेतुं व्याख्याति§§ **अपि चेति** । ननु

१४३ । ६
१४४ । ३

* तां मायामिति २ पु पा । † सर्वलोकेति २ पु. पा. ।
‡ पुरुषेति नास्ति ३ पु. । § स्त्रीलिङ्गादिनिर्देश इति १ पु. पा. ।
|| कृष्णाख्याऽतिकृष्णेति १ पु. पा । ¶ तावदुक्तेति नास्ति २ पु. ।
** कृष्णरूपमिति १ पु. पा. ।
†† अत्र सप्तमम् अन्तरधिकरणं समाप्तम् । अत्र सूत्रे २-अन्तस्तद्धर्मोपदेशात् २० भेदव्यपदेशाच्चान्यः २१ ॥
‡‡ धर्मवत्तुल्यमिति २-३ पु पा । §§ व्याचष्टे इति २ पु पा ।

परबलीयस्त्वन्यायेन प्रथममाकाशं बाध्यताम् अत आह **एकवाक्यगतानामिति***। निरपेक्षं परं पूर्वं बाधते एकवाक्यनिविष्टशब्दानां तु पूर्वानुरोधेनोत्तरार्थप्रतिपत्तिस्तद्विरुद्धार्थसमर्पणे वाक्यभेदापत्तेरित्यर्थः । यदेष† आकाश आनन्द‡ इत्यादौ ब्रह्मण्याकाशशब्दो गौणो दृष्ट[१]स्तद्वदिहापि स्यादित्याशङ्क्याह **न च क्वचिदिति**। **यादांसि** जलचराः । यादांसीति प्रयोगे गङ्गापदाभिधेयस्य वाक्यार्थान्वयसम्भवान्मुख्यत्वं न त्विह नभसो वाक्यार्थान्वय आनन्त्याद्ययोगादत आह **संभवश्चेति**। मुख्यानुगुण्येन गुणानां नयनस्योक्तत्वादित्यर्थः । अस्तु तर्हि ब्रह्मणि मुख्यस्तत्र वक्तव्यं किं ब्रह्मनभसोर्मुख्यम् उत ब्रह्मण्येवेति । नाद्य इत्याह **अनेकार्थत्वस्येति**। न हि द्वितीय॥ इत्याह **भक्त्या चेति**। ननु नभसि गौणः ब्रह्मणि रूढः किं न स्यात्तत्राह **तत्पूर्वकत्वाच्चेति**। प्रश्नोत्तरयोरेकार्थपर्यवसानसामर्थ्य¶-लक्षणं लिङ्गसूत्रगतलिङ्गशब्दार्थमभिप्रेत्य सिद्धान्तयति **सामानाधिकरण्येनेति**। नन्वैकार्थ्येऽपि प्रश्नोत्तरयोः प्रतिवचनस्थाकाशशब्दानुरोधात्प्रश्नोऽपि मुख्याकाशपरोऽस्तु तत्राह **पौर्वापर्येणेति**। प्रश्नोत्तरयोरर्थत-शब्दतश्च पूर्वापरत्वेनानुसंधानादसंजातविरोधप्रश्नानुसारेण चरममुत्तरं नेयमित्यर्थः । अनेन प्रथमत्वे हेतोरसिद्धिरुक्ता प्राधान्यं तूपक्रमविरोधे सत्यकिञ्चित्करमित्युक्तं **प्रधानत्वेऽपीति**। आकाशपदस्य प्रधानार्थत्वेऽपि गौणता अपिशब्दान्न नभसः प्रधानत्वमपि तु पृष्टस्य सर्वकारणस्यैवेत्यर्थः । प्रधानत्वेऽपीत्येतद्व्याचष्टे **यद्यपीति**। सामानाधिकरण्येनेत्येतद्विभजते **यत्पृष्टमिति**। अस्तु प्रश्नोत्तरयोरेकविषयत्वं प्रश्नविषयस्तु नभ इति नेत्याह **तदिहेति**। १४४ । १

यत्तु कश्चिदाह । दाल्भ्येन स्वर्गलोकः सामप्रतिष्ठेत्युक्ते शालावत्योऽप्रतिष्ठत्वेन तद्दूषयित्वा पृथिवीलोकः साम्नाश्रय इत्यूचे । प्रवाहणस्तु तम-न्तवत्त्वेनादूदुषत् । तर्ह्यस्य लोकस्य का गतिरिति शालावत्योऽपृच्छत् । तत्र पृथिवीकारणमात्रं पृष्टं न सर्वलोकगतिः । तस्मात् । १४५ । २

---

* एव वाक्यगतमिति भामतीपुस्तके अशुद्धं मुद्रितम् । † अथ यदेव इति २ पु पा ।
‡ आनन्द इति नास्ति २ पु । [१] दृष्ट इति नास्ति २ पु ।
॥ एतदर्थ-प्रयोगदर्शनादिति न वक्तव्य । तद्वान्यथा ऽप्युपपन्नम इति पाठो ऽधिकः २ पु ।
¶ सामर्थ्येति नास्ति ३ पु ।

पूर्वापरपरामर्शरहितैः प्राणमानिभिः* ।
कल्पितेयं गतिर्नैषा विदुषामनुरञ्जिका ॥ इति ।

तच्छ्रुतिभावानवबोधविजृम्भितम् । तथा हि । पृथिवीमात्रकारणस्याप्यां प्रसिद्धत्वेन प्रश्नवैयर्थ्यादस्येति च सर्वनामश्रुतेः प्रकरणाद्धुलोकस्याः सर्वकार्यविषयत्वोपपत्तेः । यस्तु प्रथमप्रश्ने दाल्भ्यकृते ऽस्यशब्दः स पृथिवीपरोऽस्तु न प्रतिष्ठां लोकमतिनयेदिति पृथिव्या एव तदुत्तरे ऽभिधानात् । द्वितीये तु शालावत्यकृते न तथा किं चिदस्ति सङ्कोचकम् । किं चाभिधत्ता†मयमप्यस्यशब्दः पृथिवीमेव तथाप्यन्तवत्त्वदोषापनिनीषया प्रश्नप्रवृत्तेः पृथिवीमात्रकारणनिरूपणे तदसिद्धेः । काकेभ्यो रक्ष्यतामन्नमितिवदयमस्यशब्दः सर्वकार्यपरः । तथा च पूर्वापरेत्यादिरूपालम्भ उष्ट्रलकुटन्यायमनुहरतीति‡ ।

१४५ । ६ पौर्वापर्येत्येतच्छङ्कोत्तरत्वेन विवृणोति न चोत्तरे इति । यद्यपि कारणविषयप्रश्नस्तथापि तत्र विशेषणतया कार्यमप्युपात्तमिति कार्यमेव पृष्टमित्युक्तम् । कथं न युक्तमत आह प्रश्नस्येति । यथा ह्युर्च्चैर्ऋचा क्रियत इत्यत्र विध्युद्देशगता§ ऋगादिशब्दास्त्रयो वेदा अजायन्तेत्युपक्रमगतमर्थवादस्थमपि वेदशब्दमेकवाक्यत्वसिद्ध्यर्थमनुरुन्धाना ऋगादिजातिवचनतां मुञ्चन्तो वेदलक्षणा||र्था इति निर्णीतं वेदो वा प्रायदर्शना¶दित्यत्र । एवमत्राप्येकस्मिन् वाक्ये ऽस्य लोकस्य का गतिरिति सर्वकारणत्वाविरुद्धायां बुद्धौ तद्विरुद्धार्थस्य वाक्यैक्यविनाशिनो निवेशायोगादाकाशपदं परमकारणे गौणमित्यर्थः । ननु निर्णीतार्थे उपक्रम उपसंहारमन्यथयेन्न प्रश्नोपक्रमः संदिग्धार्थत्वादिति तत्राह न चेति । प्रश्नः स्वविषयव्यवस्थित एव न चेत् तत्र वक्तव्यं स निर्विषयः पृष्टादन्यविषयो वा । नाद्य

,, । १३ इत्याह अनालम्बनत्वेति । न द्वितीय इत्याह वैयधिकरण्येति । एवं तावत्प्रश्नप्रतिवचनवाक्यसामर्थ्यं तल्लिङ्गादिति सौत्रहेतुवचनार्थ इति व्याख्याय वाक्यशेषस्थलिङ्गपरतया व्याख्यान्तरमाह अपि चेत्यादिना ।

सर्वेषां लोकानामिति प्रश्नोपक्रमादिति उत्तरे सर्वाणीति दर्शनात् प्रश्नस्थः षष्ठ्यन्तलोकशब्दो ऽस्येति सर्वनामसहपठितो व्याख्याय निर्दिष्ट

---

* प्राणाभिमानिभिरिति २ पु. पा. । † अभिदधात्विति २ पु. पा. ।
‡ अनुसरतीति २-३ पु. पा. । § विधेयसमर्पका इति २ पु. पा. ।
|| वेदत्वलक्षणेति २ पु. पा. । ¶ जै. सू. अ. ३ पा. ३ सू. २ ।

इति । इदं च प्रश्नस्य सर्वकारणविषयत्वे लिङ्गम् । इतरथा ह्युत्तरे पृथिव्याकाशात् समुत्पद्यतइति स्यात्तन्मात्रकारणस्य पृष्टत्वादिति । ननु साम्ये विरोधिनां भूयसां न्याय इह तु प्रधानमाकाशशब्दार्थो नाप्रधानैर्भूयोभिरपि बाध्येत । यदाह कश्चित् ।

त्यजेदेकं कुलस्यार्थे इति राद्धान्तयन्ति ये ।
शेषिबाधे न तैर्दृष्टमात्मार्थे पृथिवीमिति ॥ इति ।

**तथाह न चाकाशस्य प्राधान्यमिति** । ननु शेष्यर्थत्वादाकाशपदं प्रधानार्थमत आह **तथा चेति** । उपक्रान्तं प्रधानं ब्रह्म विशिंषन्नाकाशशब्दः प्रधानार्थो न तु गगनमभिदधदित्यर्थः । अपि चेति भाष्योक्तान्तवत्त्वप्रतिपादिकां श्रुतिमाह **अन्तवदिति** । आस्तां प्रश्नोपक्रमानुरोधः प्रतिवचने ऽपि वाक्यशेषगताऽनन्यथासिद्धब्रह्मलिङ्गादाकाशपदं गौणमिति भाष्यार्थमाह **तत्रैव चेति** । १४६ । ५

उद्गीथे कुशलास्त्रयः शालावत्यदाल्भ्यजैवलयः कथामारेभिरे । शालावत्यो दाल्भ्यं पप्रच्छ का साम्नो गतिः कारणमिति इतर आह स्वर इति । स्वरस्य प्राणः प्राणस्यान्नम् अन्नस्यापः अपां स्वर्गः पृष्टस्तत आगतेरिति दाल्भ्ये प्रत्युक्तवति स्वर्गस्यापि मनुष्यकृतयज्ञाद्यधीनोस्थितिकत्वादप्रतिष्ठितं वै किल ते दाल्भ्य सामेत्युक्ता अयं लोकः स्वर्गस्य गतिरिति शालावत्यः प्रतिजज्ञौ । तं राजा जैवलिराहान्तवद्वै किल ते शालावत्य साम कारणमिति तर्ह्यस्य लोकस्य का गतिरिति पृष्टो राजा आकाश इति होवाच ज्यायान्महत्तरः परमयनमाश्रयः परायणं परोवरेभ्यः* स्वरादिभ्यो ऽतिशयेन वरः परोवरीयान् । स चाकाश उद्गीथे संपाद्योपास्यत्वादुद्गीथः† ॥

## अत एव प्राणः ॥ २३ ॥

,, । १८

अतिदेशत्वात्सैव सङ्गतिः । अथ वा ऽनन्तत्वमुपरत्वादुपक्रमोपसंहारयोरस्त्वाकाशवाक्यं ब्रह्मपरमत्र तु ब्रह्मासाधारणधर्मपरोपक्रमोपसंहारादर्शनान्न ब्रह्मपरतेति सङ्गतिः । अथ वा ऽऽकाशवाक्यानन्तर्यात्प्राणवाक्यस्येति सङ्गतयः । विषयप्रदर्शकभाष्यउद्गीथइत्यन्तं तदुद्गीथप्रकरणे प्रासङ्गिकं

* परंवरेभ्य इति २ पु० । परंपरं वरेभ्य इति ३ पु० ।
† अत्र अष्टमम् आकाशाधिकरणं संपूर्णम् । तत्र सूत्रम् १–आकाशस्तल्लिङ्गात् २२ ॥

प्रस्तावोपासनमिति कथयितुमित्याह उद्गीथेति । पुरस्ताद्धि परोवरीयांस-मुद्गीथमुपास्त इत्युक्तं परस्ताच्चाम्नातः श्लोक* उद्गीथ इति अतः प्रस्ताव-वाक्यं यद्यपि विषयस्तथापि प्रकरणशुद्ध्यर्थमुद्गीथग्रहणमित्यर्थः । श्लोकस्य पूर्वार्द्धं व्याचष्टे ब्रह्मणा वेति । न ह्याकाशाद्वाय्वादयः प्रत्यक्षादियोग्या ऽतो

१४७ । १२ वाक्यशेषाद्युक्तो ब्रह्मनिर्णयः । उत्तरार्द्धं विवृणोति इह त्वित्यादिना । इह सर्वाणि ह वेति वाक्ये इत्यर्थः । भोगप्रत्यासत्तेरिन्द्रियाणां भूतसारत्वं ततः प्राधान्येन सर्वभूतलक्षणया भूतोत्पत्तिलयौ वायाविति प्रत्यक्षानुगृहीतया श्रुत्योक्तं तस्याः संवादलब्धबलाया बलात्सर्वाणीति वाक्यं वायुविकारपरं व्याख्येयमिति । कतमा देवतोद्गीथमन्वायत्तेत्यादित्य इति होवाच कतमा प्रतिहारमित्यन्नमिति देवते अभिहिते । कार्यकारणसंघातरूपे इति । शरीरिणावित्यर्थः । अन्नमपि तदभिमानिदेवता स्वत एव निश्चायकत्वा-त्स्वविषयज्ञानोत्पादे मानान्तरं नापेक्षत निश्चयपूर्वकत्वाद्व्यवहारस्य स्ववि-षयव्यवहारे नापेक्षते ऽसंवादिनो वाक्यस्य स्वविषयेनादार्ढ्यं रूपइव चक्षुषः संवादिनो न दार्ढ्यं चक्षुष इव द्रव्ये त्वसंवादिना इति येन प्रमाणानां संवादविसंवादावप्रयोजकौ तेन यदा वै पुरुष इति वाक्यादिन्द्रियमात्रस्य सुप्तिसमये वायुविकारे संवेशनोद्गमने भवेताम् । न त्वेतावता सर्वभूतो-त्पत्तिलयौ तदाश्रयौ योजयितुं शक्यौ तयोस्तत्र वाक्ये प्रतीत्यभावात् ।

१४८ । १० अथ पुनरिन्द्रियसारत्वात्सर्वभूतलक्षणा तत्राह प्रतीतौ वेति । ननु कथं ब्रह्मैव भवेद्यावता सुप्तौ वायुविकारे लयः प्रमाणान्तरसिद्धस्तत्राह न चेति । इन्द्रियमात्रलयः प्रमाणान्तरदृष्टो न भूतलयस्तेनाकाशवाक्यवद् इति वाक्ये ऽपि यदि† सर्वभूतलयः प्रतीयेत‡ तर्हि वाक्यशेषाद् ब्रह्मनिर्णय इत्यर्थः । एवं तावत्स्वापवाक्यस्य भूतलयत्वमाश्रित्य तदनुसारेण सर्वाणि ह वेति वाक्यं वायुविकारे सर्वभूतलयं वक्तीति शङ्का निरस्ता । इदानीं तस्य यथाश्रु-तेन्द्रियलयमात्रपरत्वमाश्रित्य तदनुरोधेनेदमपीन्द्रियलयपरं व्याख्यायते तथा च न ब्रह्मलिङ्गसिद्धिरित्याशङ्क्याह न च मानान्तरेति। सर्वभूत-संवेशनस्य वाय्वाश्रयत्वयोजनायामुक्तं दूषणमिन्द्रियमात्रलयपरत्वयोजनाया-

* श्लोकेति ३-१ पु. पा ।
† यदीति नास्ति २ पु. ।
‡ प्रतीयतइति ३ पु. पा. ।

मपि संचारयति स्वतःसिद्धेति । ननु वाक्यभेदमभ्युपेत्य संवादिवाक्य- १४८ । १८
बलादितरसङ्कोचं न वदामो ऽपि त्वेकवाक्यतामत आह न चास्येति ।
यदा वै पुरुष इत्यस्य संवर्गविद्यागतत्वात्सर्वाणि ह वेत्यस्योद्गीथविद्याग-
तत्वादित्यर्थः । अभ्युपेत्याह एकवाक्यतायां चेति । नन्वेकवाक्यत्वे
कुतो विनिगमना यतस्तद् ब्रह्मपरं न पुनरिन्द्रियमात्रलयपरमित्यत आह
इन्द्रियेति । अवयुत्यवाद एकदेशस्य विभज्य कथनम् । सर्वोत्पत्तिलयौ
हि सर्वाणि ह वेत्यत्र प्रतीतौ तत्रत्यसर्वशब्दानुरोधेन इन्द्रियमात्रोत्पत्तिल-
यकथनमेकदेशानुवादत्वेन घटिष्यते ।

एकं वृणीतइत्यादावार्षेयवरणे सर्वत्रापूर्वत्वाद्विधिमाशङ्क्य वर्तमाना-
पदेशत्वाद्विधिः कल्प्यः । सर्वत्र च तत्कल्पने सकृच्छ्रुतस्य न चतुरो वृणी-
तइत्याद्यर्थवादस्य प्रतिविध्यावृत्तिः स्यात्मा भूदित्येकत्र विधिकल्पना
तत्रापि त्रीन् वृणीतइत्यत्रैव । तथा सति हि शते पञ्चाशदितिवद् द्वौ वृणी-
तइत्याद्यन्तर्भावादनुवादः स्यादिति षष्ठे[*] राद्धान्तितमेवमत्रापीत्यर्थः ।

चिन्ताप्रयोजनमाह तस्मादिति । भाष्ये वाक्यशेषशब्द एकवाक्य- ,, । २१
त्वपरः । इह हि स्ववाक्ये ब्रह्मलिङ्गं दृश्यते ऽन्नादित्यसंनिधानं वाक्यान्त-
रसापेक्षमतः स्ववाक्यस्थलिङ्गं प्रबलमिति भाष्यार्थमाह वाक्यादिति ।
वाक्यस्य संनिधानादत्र प्राबल्यं निरूप्यतइति न भ्रमितव्यमत्र ब्रह्मवाचि-
पदाभावेन वाक्यत्वाभावात् । कतमा सा देवतेति[†] चेतनवाचिदेवताशब्दो-
पक्रमात् सैषा देवतेत्युपसंहाराच्च चेतनपरं वाक्यं न वायुविकारपरम् ।
अथ प्राणाभिमानिनी देवता लक्ष्येत तर्हि तत्रापि समः श्रुतित्यागो मम तु
वाक्यशेषः साक्षीत्यभ्युच्चयः ।

चाक्रायणः किल ऋषिर्धनाय राज्ञो यज्ञमभिगम्य ज्ञानवैभवमा-
त्मनः प्रकटयितुकामः प्रस्तोतारमुवाच हे प्रस्तोतः या देवता प्रस्तावम-
न्वायत्ता तां चेदविद्वान् मम विदुषः संनिधौ प्रस्तोष्यसि मूर्द्धा ते विपति-
ष्यतीति । स भीतः पप्रच्छ कतमा सेति । प्रत्युक्तिः प्राण इति । प्राणमभिलक्ष्य
संविशन्ति लयकाले उत्पत्तिकाले उज्जिहते उद्गच्छन्ति[‡] ॥

---

[*] जै· सू· अ· ६ पा· १ सू· ४३ । [†] कतमा सा देवतेति ३ पु· पा· ।
[‡] अत्र नवमं प्राणाधिकरणं संपूर्णम् । तत्र सूत्रम् १—अत एव प्राणः २३ ॥

१४९ । ४

## ज्योतिश्चरणाभिधानात् ॥ २४ ॥

यदिदमित्यनुभूयमानत्वमुक्तं तद्व्याचष्टे **त्वग्ग्राह्येणेति** । तस्यैषा दृष्टिर्यत्रैतदस्मिन् शरीरे स्पर्शेनो*ष्णिमानं विजानाति तस्यैषा श्रुतिर्यत्रैतत्कर्णावपिधाय निनदमिव शृणोतीति वाक्यं व्याचष्टे **तत्र शारीरस्येति** । नन्वौष्ण्यघोषोपलब्ध्योः कथं तस्येति ज्योतिःसंबन्धनिर्देशोत आह **तल्लिङ्गेनेति** । औष्ण्यघोषलिङ्गेनेत्यर्थः । गमकसंबन्धिनो गम्यसंबन्धोपचार इत्यर्थः । श्लोकं पूरयति **गौणेति** । नन्वौत्सर्गिको ऽपि मुख्यसंप्रत्यय आकाशप्राणशब्दवदपोद्यतामत आह **वाक्यस्थेति** । तत्र हि वाक्यशेषस्थब्रह्मलिङ्गाद्गौणता ऽत्र तु वाक्ये ब्रह्मलिङ्गं नोपलभ्यते प्रत्युत तेजोलिङ्गमेवोपलभ्यते अत उत्सर्गो ऽनपोदित इत्यर्थः । अनेन सङ्गतिरुक्ता । ननु पूर्वत्र गायत्रीवाक्ये तावानस्येति ब्रह्म-

,, । २० लिङ्गमस्त्यत आह **वाक्यान्तरेणेति** । न हि वाक्यान्तरस्थाल्लिङ्गात्स्ववाक्यस्था श्रुतिर्मुख्यार्थात्प्रच्यावयितुं शक्येत्यर्थः । अभ्युपेत्य वाक्यान्तरेण नियममाह **तदर्थेति** । दिवि दिव इति च सप्तमीपञ्चमीभ्यां प्रत्यभिज्ञानविच्छेदान्न वाक्यान्तरार्थ इह ग्राह्य इत्यर्थः । वाक्यस्येत्येतद्व्याचष्टे **बलवदिति** । तेजोलिङ्गमेव दर्शयति **दीप्यतइत्यादिना** । किमुपोद्बलनाय निरासार्थं वोपन्यस्तमत आह **इह तन्निरासेनि** । निरासकारणं हि प्राप्तिः । न चान्तस्तद्धर्मोपदेशा†दिति निरस्तस्यात्र प्राप्तिरित्यर्थः । भवत्वेकदेशस्य मर्यादा न समस्तस्येत्याशङ्क्याह **तस्य चेति** । न समस्तं तेज उपास्यं किं त्ववयव इत्यर्थः । वाक्यान्तरेणेत्येतद्व्याख्याति‡ **न च पादो ऽस्येति** । तदर्थो प्रतिसन्धित इत्येतद्व्याचष्टे **न च वाक्यान्तरे**

१५० । २२ **इति** । अस्यैव व्याख्यानान्तरमाह **अपि चेति** । गायत्र्याश्छन्दोवचनत्वेन सन्देहाद्वाक्यान्तरस्य ब्रह्मार्थत्वं साध्यं न सिद्धम् । अप्रतिसन्धित इत्यस्याप्यनिश्चयादित्यर्थः । तेन वाक्यान्तरेण यदतः पर इति वाक्यं ब्रह्मपरतया नियन्तुं कथं शक्यमिति योजना । तमो ज्योतिरिति भाष्ये तमोग्रहणप्रयोजनमाह **तेज इति** । **अर्थावरकत्वेनेति** । अनुद्भूतस्पर्शत्वेन

---

* संस्पर्शेनेति १ पु. पा. । † ब्र. सू. अ. १ पा. १ सू. २० ।
‡ व्याचष्टे इति ३ पु. पा. ।

तमसो नयनरश्मिनिर्गमनप्रतिबन्धकत्वाऽयोगादर्थप्रकाशनप्रतिबन्धकत्वेन निरोधकत्वं तमस इत्यर्थः । सिद्धान्त्येव पूर्वपक्षापेक्ष आक्षेप्ता । एकदेशी पूर्वपक्ष्येकदेशी । न प्रयोजनान्तरेति भाष्यस्यायमर्थः । प्राणिकर्मनिमित्ता सृष्टिः सप्रयोजना तथाऽत्रिवृत्कृतं तेज उपास्त्यर्थं सृष्टमिति न शक्यं वक्तुं प्रयोजनान्तरप्रयुक्तस्येवादित्यादिवदुपास्यत्वसम्भवे तस्य सृष्टिं प्रत्यप्रयोजकत्वाद्धाजिनस्येव दध्यानयनं प्रतीति । तासां त्रिवृतं त्रिवृतमिति भाष्यं व्याचष्टे **एकैकामिति** । तेजआदि भूतं प्रति सामान्यप्रवृत्ता त्रिवृत्करणश्रुतिरुपास्यमानतेजोविषयत्वेन सङ्कोचयितुं न युक्ता ततोऽन्यत्र तेजसमयुक्तेत्यर्थः । तेजआदीनि परोक्षत्वसाम्याद्देवताः । **त्रिवृतं** त्रिवलितम् । न वयं वाक्यान्तरस्थलिङ्गात्तेजःश्रुतिं बाधामहे अपि तु तदुपबृंहितश्रुत्येत्याह **सर्वनामेति** । **प्रसिद्धं** प्रज्ञातम् । **प्रसाध्यं** नाद्यापि ज्ञातम् । यदा यच्छब्दः प्रज्ञातवचनस्तदा गायत्रीवाक्यनिर्दिष्टं ब्रह्म परामृशतीत्याह **प्रसिद्धेति** । **तद्बलादिति** । यच्छब्दश्रुतिबलादित्यर्थः । **तेनेति** । येन पूर्ववाक्यस्थमपकर्षति तेनेत्यर्थः । ननु दिवि दिव इति च रूपभेदान्न पूर्ववाक्यस्थब्रह्मण इह प्रत्यभिज्ञाऽतः सर्वनाम तं न परामृशेदत आह **प्रधानं हीति** । प्रातिपदिकार्थे इत्यध्याहार्यम् । प्रातिपदिकार्थो द्यौस्तावदुभयत्र समा सा हि प्रधानं गुणस्तु विभक्त्यर्थः । तस्माद् गुणे त्वन्याय्यकल्पनेति विभक्तिवैरूप्यं नेयमित्यर्थः । यदवादि छन्दोभिधानात्सन्दिग्धं प्राचि वाक्ये ब्रह्मेति तत्राह **ब्रह्मेति** । तत्र गायत्रीवाक्ये त्रिपाद् ब्रह्म न तु छन्द इत्यर्थः । यस्याहिताग्नेरग्निर्गृहान् दहेदग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेदित्यत्र दहेदिति विधिविभक्तिः प्रसिद्धार्थयच्छब्दोपहता गृहदाहलक्षणनिमित्तपरा । आर्च्छेदिति च विधिविभक्तिः स ऐन्द्रं पञ्चशरावमोदनं निर्वपेदिति विधास्यमाननिर्वापनिमित्तं हविरार्तिमनुवदति । उभयं दधिपयः*।

**वचनानि त्विति** । ज्योतिष्टोमगतसोमेषु शेषभक्षो विध्यभावान्न विद्यत इति प्राप्ते सर्वतः परिहारमाश्विनं भक्षयति तस्मात्सर्वा दिशः शृणोतीत्याद्यर्थवादा अप्राप्त्यान्द्रष्टाऽनुवादायोगाद्विधायकानि वचनानीत्युक्तं

* दधिपयसी इति वक्तुं युक्तम् । न दधिपयआदीनामेकवद्भावनियमात् ।

तृतीये । एवं प्राप्तमात्रे प्रसिद्धार्थत्वं सर्वनाम्नो ऽपनीयतइति यदाग्नेयइति तुल्यन्यायत्वादुदाहृतम् । कार्यज्योतिरुपलक्षित इति भाष्योक्तलक्षणायां

१५२ । १४ संबन्धमाह **ब्रह्मविकार इति** । ननु वाक्यस्थज्योतिर्लाभे प्रकृतहानं न दोषो ऽत आह **प्रसिद्ध्यपेक्षायामिति** । यच्छ्रुतेर्विषयगवेषणे प्रकरणप्राप्तमपि प्रसिद्धं ग्राह्यं न स्ववाक्यगतमपि प्रस्तोष्यमाणमपूर्वमसिद्धेरित्यर्थः । शास्त्रवशादन्यदृष्ट्यालम्बनं प्रतीकम् । कौक्षेयज्योतिषो ब्रह्मप्रतीकत्वे ब्रह्मसंबन्धमाह **कौक्षेयं हीति** ।

**न च भूतपृथिवीति** । एवं हि श्रूयते । गायत्री वा इदं सर्वं भूतं यदिदं किं च वाग्वै गायत्री वाग्वा इदं सर्वं भूतं गायति च त्रायते च या वै सा गायत्रीयं वाव सा येयं पृथिवी या वै सा पृथिवीयं* वाव सा यदिदं शरीरमस्मिन् हीमे प्राणाः प्रतिष्ठिता यद्वै शरीरम् इदं तद्यद्हृदय|मस्मिन् हि प्राणाः प्रतिष्ठिता इति । पृथिव्या भूताधारत्वात्सर्वभूतमयगायत्रीत्वं शरीरहृदययोर्भूतात्मकप्राणाश्रयत्वाद्गायत्री । ता एवमन्यार्थोक्तवाक्प्राणसहितैर्भूतादिभिः षड्विधा गायत्रीति ।

१५४ । १५ **गायत्र्याः सर्वच्छन्द इति** । एवं हि श्रूयते । चतुरक्षराणि छन्दांस्यग्रे समभवन् तेषु जगती सोमाहरणाय गता त्रीण्यक्षराणि हित्वा आगच्छत् । एकं हित्वा त्रिष्टुबागता । गायत्री तु गत्वा तानि गलितानि चत्वार्यक्षराणि सोमं चाहृतवती । ततः सा ऽष्टाक्षरा ऽभवत्तयैव सवनत्रयमतन्वत याज्ञिकाः । माध्यन्दिने सवने त्रिष्टुभा प्रार्थिता गायत्री तामुपाह्वयत् । सा च गायत्र्यक्षरैरष्टभिः स्वीयैरेव शिष्टैस्त्रिभिरक्षरैरेकादशाक्षरा ऽभवत् । ततो जगत्या प्रार्थिता गायत्री तां तृतीयसवने उपाह्वयत् । सा च स्वीयेनैकेन प्राचीनैश्चैकादशभिरक्षरैर्द्वादशाक्षरा ऽभवदित्युक्त्वोपसंहृतं तस्मादाहुर्गायत्राणि वै सर्वाणि सवनानीति । द्विजातीनां द्वितीयजन्मजननीत्वं श्रुतं गायत्र्या ब्राह्मणमसृजदिति । त्रिष्टुभा राजन्यं जगत्या वैश्यम् इति ।

केन चिदत्र प्रसिद्धा त्रिपाद् गायत्री न प्रत्यभिज्ञायते ऽस्याश्चतुष्पात्त्वादित्युक्तम् । तन्न । षडक्षरैश्चतुष्पदो ऽप्यष्टाक्षरैस्त्रिपात्त्वोपपत्तेरिति ।

---

* या वै सा पृथिवीति नास्ति ट पु. । । इदं तद्हृदयमिति ट पु. पा.

**स्वात्मनीति यावत् त्रयः पादा इति***। अल्पं प्रपञ्चं पादमपेक्ष्य स्वरू-पमपरि†च्छिन्नत्वात् त्रयः पादा इति दिवीति वाक्यशेषवशात् । त्रिपादिति मन्त्रपदस्य व्याख्यान्तरमाह **अथ वेति**। पद्यते ज्ञायते ऽभिस्तुरीयमिति विश्वतैजसप्राज्ञास्त्रयः पादाः । एते यस्य तत्त्रिपात्तुरीयं स्वपादद्वारा गगने ऽवस्थितमिति मन्त्रार्थः । ननु त्रिपाद् ब्रह्मणः अयं वाव स‡ इति कथं भूताकाशैक्योपदेशो ऽत आह **तद्धीति**। उपलब्धिस्थानस्तुत्यर्थं ब्रह्म- १५५ त्वोक्तिरित्यर्थः । **बाह्यानिति**। शरीराद्बहिष्ठानिति । ननु चतुष्पात्त्वगु-णयोगाद्गायत्रीशब्दो ब्रह्म गमयति कथमभिहितमिति भाष्यनिर्देशो ऽत आह **ब्रह्मपरत्वादिति**। ननु पूर्वत्रापि विकारानुगतं§ ब्रह्म गाय-त्रीपदेन लक्षणया तात्पर्येण गमितमतः को विशेष उच्यते । गौणे प्रयोगे ऽभिधेयगतो गुणस्तात्पर्याल्लभ्यते लक्षणायां तु संबन्धं निमित्तीकृत्यार्था-न्तरे तात्पर्यमिति गायत्र्याख्यस्य ब्रह्मणो हृदि स्थितस्योपासनाङ्गत्वेन द्वारपालादिगुणविध्यर्थं तस्य हेत्यादि वाक्यं तदर्थतो ऽनुक्रामति **हृदय-स्येत्यादिना**। प्रागादिदिग्गता हृदयकमलसुषयो द्वाराणि तत्स्थाः प्राणा-दिवायवो द्वारपालास्ते च चक्षुरादिकरणयुक्ता आदित्यादिदेवैरधिष्ठिता इति समुदायार्थः । प्राणशब्दं निर्वक्ति **प्रायणकाले इति**। स आदित्य इत्यनन्त-रनिर्दिष्टचक्षुष आदित्यत्वं नोच्यते किं तु प्राणस्येत्याह **स एवेति**। कार-णमाह **आदित्य इति**। अधिष्ठात्रधिष्ठेययोरैक्योपचारः । श्रोत्रद्वारा चन्द्रमा व्यानस्याधिष्ठाता । एवमुत्तरत्रापि करणद्वारा वाय्वधिष्ठातृत्वं देवतानां द्रष्ट-व्यम् । अपश्वासस्या‖ऽपानस्य मुखे वाक्संबन्धाद्वाक्त्वमित्यर्थः । सो ऽग्निरिति श्रुतो वाचोऽग्नित्वमुक्तं तत्र हेतुमाह **वाग्वा इति**। **तत्पर्जन्य इति**। १५६ पर्जन्यो वृष्ट्यात्मको देवस्तन्निमित्ता आपः तथा मनोनिमित्ताश्च मनसा सृष्टा आपश्च वरुणश्चेति श्रुतेरतो मनसः पर्जन्यो ऽधिष्ठाता । उदानवायुः¶ सामान्यात्मकः सहायकत्वे* वर्तते तस्य च वाय्वाधार आकाशः परमेश्वरो देवतेत्यर्थः । हार्दस्य ब्रह्मणः पुरुषाः प्राणादयः । यदादावुक्तं प्रधानप्रकृ-

* स्वात्मनि त्रयः पादा इति १-५ पु॰ पा॰ । † स्वरूपस्यापरीति २ पु॰ पा॰ ।
‡ इदं वाव स इति ३ पु॰ पा॰ । § विकारान्तरानुगतमिति २ पु॰ पा॰ ।
‖ अधःश्वासस्येति २ पु॰ पा॰ । ¶ उदानस्य वायुरिति २-३ पु॰ पा॰ ।
सहायकत्वेनेति २ पु॰ साहाय्यके वर्ततइति ३ पु॰ पा॰ ।

त्यर्थप्रत्यभिज्ञानुरोधेन प्रत्ययार्थवैषम्यं नेयमिति तदुपदर्शकं भाष्यं व्याचष्टे
१५६ १३ **यदाधारत्वमिति । अर्वाग्भागेति ।** यदा मुख्यमाधारत्वं वृक्षाग्रस्य विवक्षितं तदा वृक्षाग्रात्परतः श्येन इति प्रयोगे श्येनशब्दो वृक्षाग्रलग्नश्येनावयवादुपरितनावयवावच्छिन्नावयविलक्षक इत्यर्थः । अस्मिन्पक्षे दार्ष्टान्तिके ब्रह्मणः श्येनवदवयवाभावाद्दिव इति श्रुतिं लक्षणया व्याचष्टे **एवमिति ।** शक्यते च दृष्टान्ते ऽपि वृक्षाग्रादित्यवधिश्रुतिर्लक्षणया नेतुमग्रभागादीषदर्वाग्भागपरत्वे तदा दार्ष्टान्तिकेन साम्यमिति । यदा त्वनौपाधिकं ब्रह्माकाशास्पृष्टं विवक्षित्वा पञ्चम्येव मुख्या तदा सप्तमी सामीप्यसंबन्धं लक्षयतीत्याह **यदा त्विति । अत एवेति ।** यतः सर्वमर्यादा मुख्या ऽत एवेत्यर्थः । या तु दिवि द्योतनवतीति व्याख्या तस्यां नामी व्याख्या विकल्प्याः । अत एव तदपरितोषादथ वेत्युक्तमिति । तावानस्य महिमेति । गायत्री वा इदं सर्वं भूतमित्यादिना भूतपृथिवीशरीरहृदयवाक्प्राणमयी षड्विधा चतुष्पदा गायत्रीत्युक्तम् । अस्य गायत्र्यनुगतस्य ब्रह्मणस्तावान्महिमा विभूतिः परमार्थतस्त्वयं पुरुषस्ततो ज्यायान्महत्तरः तदेवाह सर्वाणि भूतान्यस्य पादः । अस्य त्रिपादमृतं दिवि द्योतनवति स्वा*त्मन्येव स्थितम् । यथा कार्षापणश्चतुर्द्धा त्रिभक्त एकस्मात् पादात्पादत्रयीकृतो† महानेवं पुरुषः पुरुषार्थरूपः‡ प्रपञ्चान्महानित्यर्थः ।

१० **ते वा एते इति ।** संवर्गविद्यायामधिदैवमग्निसूर्यचन्द्रादयो वायौ लीयन्ते । अध्यात्मं च वाक्चक्षुःश्रोत्रमनांसि प्राणे संह्रियन्त इत्युक्तम् । ते वायुना सह पञ्च आध्यात्मिकेभ्यो ऽन्ये । प्राणेन च सहाधिदैविकेभ्यो ऽन्ये पञ्च । एवं दशसन्तस्तत्कृतम् । अत्रापि चतुरायकद्यूतगतचतुरङ्कवत्सन्ति चत्वारः पदार्थाः त्र्यङ्कायवत्त्रयः द्व्यङ्कायवद्द्वौ एकायवदेकः । द्यूते च चतुरङ्कः कृतसञ्ज्ञः स च दशात्मकः । चतुर्ष्वङ्केषु त्रयो ऽन्तर्भवन्ति एवं सप्त त्रिषु द्वौ तथा सति नव द्वयोरेकः इति दश । वाय्वादयो ऽपि§ दशसंख्यत्वादेवं कृतम् । सैषेति विधेयाभिप्रायः स्त्रीलिङ्गनिर्देशः । दशसंख्यत्वाद्विराट् अन्नम् । दशाक्षरा विराडन्नमिति हि श्रुतिः । कृतत्वादन्नादिनीकृते ह्यन्न-

---

* स्वशब्दो नास्ति २ पु० । † पादात् त्रयीकृत इति ३ पु० पा० ।
‡ परमार्थरूप इति २ पु० पा० । § वागादयो ऽपीति २ पु० पा० ।

भूता दशसंख्यान्तर्भूता । अतस्त्वामत्तीव अतो ऽन्नादत्वेनापि गुणेन वाय्वादय उपास्या इत्यर्थः* ॥

**प्राणस्तथानुगमात् ॥ २८ ॥** १५७ । १

**अनेकेति ।** अनेकेषां लिङ्गान्यनेकानि च तानि लिङ्गानि चा प्रतिपदार्थमनेकानीत्यर्थः । तेषामेकत्वेन प्रतिभासमानवाक्ये समावेशे किं बलवत् । किममूनि सर्वाणि समबलानि उतैकमेव बलवद्यदा चैकमेव बलवत्तदा कस्य लिङ्गिनो लिङ्गं बलवत् किं ब्रह्मण उत प्राणादेरित्येतदत्र चिन्त्यते । एतच्च प्रागत एव प्राण† इत्यत्र न चिन्तितम् । तत्र हि ब्रह्मलिङ्गात् प्राणश्रुतिर्नीता न तु ब्रह्माब्रह्मलिङ्गानां बलाबलमित्यर्थः । ज्योतिर्वाक्ये ऽपि यच्छब्देन समाकृष्टे ब्रह्मणि तल्लिङ्गन्तेजोलिङ्गाद्बलवदित्युक्तम् । न तथेह किं चिन्निर्णयकारणमिति तेनाप्यगता चिन्ता ऽत एव सङ्गतिः । अथ वा दिवि दिव इत्यत्र प्रधानप्रकृत्यर्थमनुरुध्य प्रत्ययार्थो नीतः एवमिहापि स्वतन्त्रप्राणादिपदार्थभेदप्रतीतौ तत्सापेक्षत्वेन गुणभूतवाक्यार्थप्रतीतिर्युक्तमन्यथानयनमिति भिन्नोपासनविध्युपगमेन पूर्वपक्षोत्थानस्य वक्ष्यमाणत्वात्सङ्गतिः । **बहूनीति‡ ।** बहुग्रहणमनेकानि च लिङ्गानीति संग्रहे समासप्रदर्शनार्थम् । एवं च प्राणादिषु प्रत्येकमपि बहुलिङ्गदर्शनाद् भूयसां न्यायेनाप्यनिर्णयादाकाशस्तल्लिङ्गा§दित्यनेनाप्यगतार्थत्वमुक्तम् । अनन्यथासिद्धब्रह्मलिङ्गानुसारेणेतरेषामन्यथासिद्धिवदन्तस्तद्धर्मोपदेशा‖दित्यनेन पुनरुक्तिं शङ्कते **स्यादेतदित्यादिना ।** देवतालिङ्गस्यान्यथासिद्धिमाह **तथापीति ।** शास्त्रदृष्ट्या तूपदेश¶ इति सूत्रार्थं मनसि निधायाह **इन्द्रदेवताया** ,, । १८ **इति ।** ध्यानजसाक्षात्काराभ्युपगमो वाचस्पतेरेतत्सूत्रार्थाबोधादिति केचिदयुक्तमुक्तम् । यतः ।

अपि संराधने सूत्राच्छास्त्रार्थध्यानजा प्रमा ।
शास्त्रदृष्टिर्मता तां तु वेत्ति वाचस्पतिः परम् ॥

* अत्र दशमं ज्योतिश्चरणाधिकरणं संपूर्णम् । तत्र सूत्राणि ४-ज्योतिश्चरणाभिधानात् २४ छन्दोऽभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात्तथा हि दर्शनम् २५ भूतादिपादव्यपदेशोपपत्तेश्चैवम् २६ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् २७ ।

† व्यास सू॰ अ॰ १ पा॰ १ सू॰ २३ ।
‡ अयं प्रतीको नास्ति ३ पु॰ ।
§ व्या॰ सू॰ अ॰ १ पा॰ १ सू॰ २२ ।
‖ व्या॰ सू॰ अ॰ १ पा॰ १ सू॰ २० ।
¶ व्या॰ सू॰ अ॰ १ पा॰ १ सू॰ ३० ।

वसत इति द्विवचनश्रुत्या सहोत्क्रमणादिलिङ्गानुगृहीतयोपास्यभेदप्रतीतिर्न वाक्यस्य ब्रह्ममात्रपरत्वनिर्णय इति वदन् पूर्वपक्षसंभवमाह

१५८ । १५ अत्रोच्यत इति । तस्य प्राणस्य प्रज्ञात्मना जीवेन सहोपास्यत्वमुक्तमित्यर्थः । ब्रह्मणि प्राण इति । स एष प्राण आनन्दो ऽजर इत्यत्र प्राणशब्दो ब्रह्मवाचीत्यर्थः । भवतु पदार्थावगमपूर्वको वाक्यार्थावगमस्तथापि गामानयेत्यादाविवैकवाक्यता किं न स्यादत आह पदार्थानां चेति । गुणप्रधानयोग्यपदार्थावगमे भवत्वेकवाक्यता इह तु सहोत्क्रामत इत्यादिभिः स्वातन्त्र्यावगतेर्वाक्यभेद इत्यर्थः । हेतुः पदार्थावबोधो हि वाक्यार्थबोधे ऽत एव स गुणः । उद्देश्यस्तु वाक्यार्थप्रत्ययः प्रधानम् अतो न प्रतीतैकवाक्यत्वभङ्ग इति सिद्धान्तयति सत्यमित्यादिना । ज्ञानशक्तिमती बुद्धिः क्रियाशक्तिमांश्च प्राणः । यदि प्रत्यगात्मोपाधी भेदेन निर्दिष्टौ न तु जीवप्राणौ स्वातन्त्र्येण कथं तर्हि प्राण एव प्रज्ञात्मेत्युपक्रम्योपास्वेति तयोरुपास्यत्वनिर्देशः भेदेनोक्तयोर्वा कथमभेदनिर्देशो

१५९ । १९ ऽत आह अत एवेति । ननु जीवप्राणब्रह्मणामुपास्यत्वेन यदि पूर्वपक्षः कथं तर्हि जीवमुख्यप्राणलिङ्ग*सूत्रावतारकपूर्वपक्षभाष्ये ब्रह्मपरत्वनिषेधो ऽत आह ब्रह्मवाक्यमेवेति† । ब्रह्मपरत्वनियमो निषिध्यतइत्यर्थः । एतत्सूत्रपूर्वपक्षभाष्यएव प्राणस्य प्रज्ञात्मत्वमुपपादयितुं प्रज्ञेत्यादि भाष्यम् । तत्र प्राणान्तरशब्दार्थमाह प्राणान्तराणीति । न मुख्यप्राणस्थितौ स्थितेस्तदुत्क्रान्तावुत्क्रान्तेस्तत्प्रतिष्ठानीन्द्रियाणि । एतत्सूत्रपूर्वपक्षोपसंहारभाष्यं तस्मादिह जीवमुख्यप्राणयोरन्यतर उभौ वा प्रतीयेयातां न ब्रह्मेति तदप्युपासनात्रयपरतया नियमयति जीवेति । अन्यतरत्वपक्ष उपक्रममात्रमस्थिर इत्यर्थः । ननु त्रयाणामुपासने कथमुभाविति निर्देशो ऽत आह ब्रह्म त्विति । उभयोः प्राप्त्यर्थो ऽयं निर्देशो न ब्रह्मव्यावृत्त्यर्थः । तर्हि न ब्रह्मेति कथमत आह ब्रह्मैवेति । एवमेता भूतमात्रा इति वाक्यस्यार्थत उपादानेन ब्रह्मलिङ्गस्यान्यथासिद्धप्रदर्शकं जीवमुख्यप्राणलिङ्ग-

* ब्र॰ सू॰ अ॰ १ पा॰ ४ सू॰ १७ ।

† ब्रह्मेति । ब्रह्मवाक्यमेवेति । इति प्रतीकद्वयं दृश्यते २ पु ।

सूत्र*सिद्धान्तभाष्यं दशानामित्यादि तद्व्याचष्टे पञ्चेति । श्रुतौ भूतमात्रा- १६० । ९
शब्दो द्वन्द्वसमासः भूतानि च मात्राश्चेति । भूतानि पृथिव्यादीनि पञ्च
मात्राः शब्दादयः सूक्ष्मभूतानि च पञ्चेति दशेत्यर्थः । प्रज्ञामात्राणां चेति
भाष्ये दशानामित्यनुषञ्जनीयं चशब्दादित्यभिप्रेत्य व्याचष्टे पञ्च बुद्धी-
न्द्रियाणीति । पञ्चबुद्धय इति । पञ्चेन्द्रियजनिता बुद्धय इत्यर्थः ।
अत्रापि द्वन्द्व एव । प्रज्ञाबुद्धयः मीयन्ते शब्दादय आभिरिति मात्रा इन्द्रि-
याणि । पूर्वोत्तरव्याख्ययोः सूत्रार्थं विभजते पूर्वमिति । उपासनात्रैविध्यप्रस-
ङ्गादिति पूर्वत्र व्याख्या ऽत्र त्वेकस्या उपासनायास्त्रिविधत्वाद् न वाक्य-
भेद इति व्याख्येत्यर्थः । किमुपासनात्रयविशिष्टं ब्रह्म विधीयते उत ब्रह्मवि-
शिष्टमुपासनात्रयं किं वा तदनुवादेन तदाश्रित्योपासनात्रयमिति । नाद्य इत्याह
युक्तमिति । न द्वितीय इत्याह वाक्यान्तरेऽभ्यस्येति[‡] । विशेषण-
ब्रह्मणः संनिधौ प्राप्तत्वाद् न तद्विशिष्टोपास्तिविधिरित्यर्थः । ततस्तृतीय-
पक्षः परिशिष्यत इत्याह तदनूद्येति । तं दूषयति तस्य चेति । ब्रह्मा- ,, । २१
नुवादेनोपासनविधावेकविशेष्यावशीकारादुपासनानां च परस्परमसङ्ग[§]त्वात्प्रत्यु-
पास्ति विध्यावृत्त्यापात इत्यर्थः ।

अत्र केचित्प्रकरणित्वे ऽपि[॥] ब्रह्मणो ऽवान्तरवाक्यभेदेन प्रत्यगा-
दिवत्प्राणादिवच्चोपासनात्रयं विधेयमत एकवाक्यत्वे ऽपि नानावाक्यत्वमविरु-
द्धम् । अपि च नैव वाक्यभेदः प्राणादित्रितयधर्मविशिष्टैकोपासनविधेरि-
त्याहुः । तन्न । यतः ।

अगत्या कल्प्यो ऽपूर्वत्वा[¶]द्वाक्यभेदो हि धारणे ।
इह ब्रह्मातिरेकेण नाऽपूर्वार्थावधारणा ॥

उपक्रमोपसंहारैक्यादवगते एकवाक्यत्वे सर्वास्मित्वविवक्षायां प्राण-
जीवधर्मा ब्रह्मणि स्तुत्यर्थं निर्दिष्टा इति शक्यते योजयितुम् । सर्वात्मत्वं
च सृष्टिवाक्यसिद्धं शक्यमनुवदितुं न त्वेवमुपरिधारणमन्यतः प्राप्तमित्य-

* व्यासमू॰ अ॰ १ पा॰ ४ मू॰ ११ । † मात्रशब्दः इति २ पु॰ पा॰ ।
‡ वाक्यान्तरेष्व एवेतानि प्रतीको दृश्यते १ पु॰ ।
§ असङ्गतत्वादिति २ पु॰ पा॰ । ॥ प्राकरणिकत्वे ऽपीति २ पु॰ पा॰ ।
¶ कल्प्यपूर्वत्वादिति ३-१ पु॰ पा॰ ।

शक्यानुवादत्वाद्वाक्यभेदस्तत्र कल्पितः । श्रवणादिविधिस्त्वनिष्टो यज्ञादिवि-
धिरपूर्वत्वाद्विषमः ।

यच्च त्रितयधर्मविशिष्टमेकमुपासनमिति तदपि न । इह हि किं जी-
वप्राणौ स्वधर्मैर्विशिष्य पुनस्ताभ्यां विशिष्टं ब्रह्मोपास्यमिष्यते । उताऽरुणैक-
हायनीवत्सर्वविशेषणविशिष्टब्रह्मोपासनं विधाय पार्ष्णिको जीवप्राणयोस्तद्ध-
र्माणां च विशेषणविशेष्यभावो विशिष्टविधिसामर्थ्यात्प्रमीयते* इति । नाद्यः ।
जीवप्राणयोः स्वधर्मान् प्रति विशेष्यत्वं ब्रह्म प्रति विशेषणत्वम् इति वैरूप्यात् ।
न चरमः । प्राणादीनां विप्रकीर्णत्वादेकविशिष्टप्रतीत्ययोगादिति ।

दिवोदासस्यापत्यं दैवोदासिः । धाम गृहम् । अरुन्मुखानिति ।
रौति शब्दार्थं शब्दयति इति रुद् वेदान्तवाक्यं तत्र मुखं येषां ते रुन्मुखाः
तेभ्यो ऽन्ये अरुन्मुखाः । शालावृकेभ्यो ऽरण्य‡श्वभ्यः । अस्तित्वे चेति ।
प्राणशब्दवाच्यस्य परमात्मनो ऽस्तित्वे प्राणानामिन्द्रियाणां निःश्रेयसं जीव-
नादिपुरुषार्थमाहुः । सर्वमेवैता इति । पृथिव्यादीनि शब्दादयश्चेन्द्रि-
येषु तज्जन्यज्ञानेषु च विषयत्वेनार्पिताः प्रज्ञा बुद्धयो मात्रा इन्द्रियाणि प्राणे
परमात्मन्यर्पितानि नेमिवद्विषयाः । अरवदिन्द्रियबुद्धयः । नाभिवदात्मा ।
तान्वरिष्ठ इति । प्राणाः किलास्मासु कः श्रेष्ठ इति निर्दिधारयिषवः
प्रजापतिं जग्मुः । स आह यस्मिन् उत्क्रान्ते इदं शरीरं पापिष्ठमिव भवति
स श्रेष्ठ इति । तथेति वागादय§ उच्चक्रमुः । तथापि शरीरमव्ययमवर्तत
प्राणोत्क्रमिषायां शरीरकरणेष्वनवस्थामापुर्वत्सु यान् श्रेष्ठंमन्यान्‖ चक्षुरादीन्
श्रेष्ठः प्राण उवाच प्राणापानादिभिः पञ्चधा ऽऽत्मानं स्व विभज्यैतदिति क्रिया-
विशेषणमित्थमित्यर्थः । याति गच्छतीति यानं यानमेव याणम् । या गतिग-
न्धनयोः । अस्याः शरीरमित्यर्थः । तस्मादेतदेवेति । उत्थापयति शरीरा-
दुत्क्रमितव्यम् । अत्र यथेति । अस्या जीवनलक्षणायाः प्रज्ञायाः संबन्धीनि
भूत्वा सर्वा सर्वाणि भूतानि तद्दृश्यत्वेन कल्पितानि वस्तुत एकं भवन्ति अस्या
एकमनु फलरूप चैतन्य स्वविषयोपाधिना ऽदूदुहद्वैचित्रवती । तस्या दुग्धायाः

* प्रतीयत इति २ पु॰ पा॰ ।
† तन्मात्रे येषामिति २ पु॰ पा॰ ।
‡ आरण्येति २ पु॰ पा॰ ।
§ वागादयः क्रमेणेति २ पु॰ पा॰ ।
‖ श्रेष्ठमन्यमानानिति ३ पु॰ पा॰ ।

प्रज्ञाया उपरि विषयत्वेन नामलक्षणा भूतमात्रा भूतसूक्ष्मं प्रतिविहितम् । उप-हितचैतन्य*द्वारा स्वरूपे दृष्टृत्वाध्यासमाह प्रज्ञया द्वारा वाच समारुह्य वाचं करणं प्रति कर्तृत्वध्यासमनुभूय तया करणेन सर्वाणि नामान्याप्नोतीति वक्तृत्वेन कर्मेन्द्रियप्रवृत्तिरपि चैतन्याधीनेति प्रज्ञादेह उक्तः† । ता वा इति । भूतानि शब्दादयश्चाधिप्रज्ञम् । प्रज्ञाशब्द इन्द्रियाण्यप्युपलक्षयति इन्द्रियेषु तज्ज्ञानेषु च दश प्रज्ञामात्राः इन्द्रियतज्ज्ञप्रज्ञाः अधिभूतेषु ग्राह्यग्राहकयोर-न्योन्यापेक्षत्वात् कल्पितत्वमतो ऽद्वैतं तत्त्वमित्यर्थः । ॥

इति श्रीमदनुभवानन्दपूज्यपादशिष्यपरमहंसपरिव्राजकाचार्य‡भगव-दमलानन्दविरचिते वेदान्तकल्पतरौ प्रथमाध्यायस्य प्रथमः पादः§ ॥

| | अस्मिन् पादे | आदितः |
|---|---|---|
| अधिकरणानि | ११ | ११ |
| सूत्राणि | ३१ | ३१ |

* उपहितमुपहितचैतन्यमिति २ पु॰ पा॰ ।

† अत्र एकादशम् इन्द्रप्राणाधिकरणं प्रातर्दनाधिकरणं वा प्रारम्भ । तत्र सूत्राणि प्र-प्राणस्तथानुगमात् २८ न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् २९ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ३० जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैवि-ध्यादाश्रितत्वादिह तद्योगात् ३१ ॥

‡ आचार्येति नास्ति १ पु॰ ।

§ चरणः इति ३ पु॰

# अथ प्रथमाध्यायस्य द्वितीयः पादः ।

१६१ । १० **सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥**

प्रथमपादे स्पष्टब्रह्मलिङ्गवाक्यान्युदाहरणम् । द्वितीयतृतीययोस्त्व-स्पष्टब्रह्मलिङ्गानि । तयोस्तु प्रायशः सविशेषनिर्विशेषब्रह्मलिङ्गकवाक्यविषयतया वा योगरूढिविषयतया वा ऽवान्तरभेदः । **अधिकरणसिद्धान्तेति ।** यत्सिद्धावर्थादन्यसिद्धिः सो ऽधिकरणसिद्धान्तः । यद्यर्थान्तररूढा अपि शब्दा ब्रह्मलिङ्गाद् ब्रह्मपरतया व्याख्यातास्तर्हि कैव कथा मनोमयत्वादिलिङ्गेषु । अपि चेह ब्रह्मशब्द एवास्ति सर्वं खल्विदं ब्रह्मेति अस्ति च वाक्यशेषे सर्वकर्मत्वादि ब्रह्मलिङ्गं तत्कथं जीवपरत्वशङ्का वाक्यस्या*त आह **पूर्वपक्षाभिप्रायं त्विति ।** क्रतुमित्यादिवाक्येनेत्यारभ्येत्यर्थः । **तज्जमिति ।** तज्जर्यामित्यर्थः । तस्मिन्ननितीति **तदन् ।** क्रतुर्ध्यानं तत्प्रधानस्तन्मयः । मनोमयत्वादीनां प्रकृतब्रह्मनैरपेक्ष्यसापेक्षत्वाभ्यां संशयमाह **तत्रेति ।** पादान्तरत्वादेव नावान्तरसङ्गतिः । स्ववाक्योपात्तधर्म†विशिष्टजीवोपासनानुवादेन शमविधिपरत्वान्न सर्वं खल्विति वाक्यमुपास्यसमर्पकमित्याह **क्रतुमिति ।**

१६२ । ९१ प्रागप्रतीतायाः क्रतुप्रवृत्तेः कथमुपासीतेत्यनुवादस्तत्राह **तथा इति ।** ननु सङ्कल्पविधेरुपास्यसापेक्षत्वाद् ब्रह्मण उपास्यत्वम् अत आह **एवं चेति ।** सापेक्षस्य गुणविध्यर्थमाश्रयदानायोगान्मनोमयत्वादिभिरेवापेक्षापूरणमित्यर्थः । स्यादेतन्मनोमयत्वादिमद् ब्रह्मैवास्त्वित्यत आह **मनोमयत्वादि चेति ।** उत्पत्तिशिष्टत्वं कर्मस्वरूपप्रतीतिसमयावगतत्वम् । यदि न ब्रह्मोपास्यं किमर्थं तर्हि ब्रह्माभिधानमित्यत आह **न चेति ।** हेतुवन्निगदाऽत‡इति तथोक्तः ।

शूर्पेण जुहोतीत्याम्नाय तेन हीति श्रुतम् । तत्र हिशब्द‡श्रुतेः स्तुतौ च लक्षणाप्रसङ्गादन्नकरणत्वं शूर्पहोमे हेतुरुपदिष्टः । तथा च यद्यदन्नकरणं दर्व्यादि तेन तेन होतव्यमिति प्रापय्य राद्धान्तितं प्रमाणलक्षणे । शूर्पं हि

* वाक्यस्येति नास्ति ३ ।
† तद्धर्मेति १ पु पा ।
‡ हेतो हिशब्देति २ पु पा ।

होमकरणं तृतीयाश्रुत्या गम्यते विध्यर्थस्य च न हेत्वपेक्षा । तस्मात्
शूर्पस्तुतिः । यत्तु हेतौ हिशब्दश्रुतिरिति । तन्न । न हि साक्षाद्दर्व्यादिना शक्य-
मन्नं कर्तुम् । अथ शक्यं प्रणाड्या कथं तर्हि श्रुतिवृत्तिता हेतुवचनस्य ।
ननु शूर्पस्तुतावपि लक्षणा स्यान्न हि तेनापि साक्षादन्नं क्रियते । अस्तु ।
स्तुतिर्ह्यनुवादत्वाद्यथाप्राप्ति लक्षणां सहेत न विधिरपूर्वार्थत्वादिति* ।

**समास इति** । प्राणः शरीरमस्येति बहुव्रीहिविग्रहवशादन्तर्गर्भि १६३ । ९
तत्सर्वनामार्थत्वात्सर्वनाम च संनिहितावलम्बीति समासः संनिकृष्टमपेक्षते
तेन सर्वनामश्रुतिर्ब्रह्मोपास्यत्वे मानमुक्ता† । ननु न ज्योतिर्वाक्यवदिह वा
वाक्यान्तरोक्तब्रह्मणो ऽस्ति संनिधापिका प्रत्यभिज्ञा यतः सर्वनाम परा-
मृश्येत । अतः स्ववाक्यस्थेन मनोमय इति मयडर्थेनाकाङ्क्षाशान्तिरत आह
**तद्धितार्थो ऽपीति** । सो ऽपि विकारप्राचुर्यसाधारणत्वेन सामान्यमतो
नाकाङ्क्षाशमकः संदिग्धत्वात् । फलितमाह **तस्मादिति** । **अन्यपरादपि** ।
शमविधिस्तुतिपरादपि इति । ब्रह्मोपादाने वाक्यशेषस्थलिङ्गसामञ्जस्यमाह
**तथा चेति** । **तदभिधानं** समासाभिधानम् । तद्धितार्थ इत्येतद्व्याचष्टे
**तत्र मनोमयपदमिति** । एव मनोमयशब्दो जीवे एव निविष्टावयवार्थो
न तु ब्रह्मणि तस्य मनआदिविरहप्रतिपादनादित्येतच्च न युक्तम् । कुतो
न युक्तमत आह **तस्यापीति** । **विकाराणां चेति** । विकारविशेषाणां
जीवानामित्यर्थः । विकारत्वं जीवानामवच्छेदापेक्षं यदि जीवद्वारा ब्रह्मणो
मनोमयत्वं तर्हि जीवे एव मनोमयपदं मुख्यमिति तदेव समासाकाङ्क्षायाः
परिपूरकमिति शङ्कते **स्यादेतदिति** । बलाबलविवेकाय पक्षविभागं करोति १६४ । ५
**तदेतदिति** । अधिष्ठानलिङ्गैः सर्वकर्मत्वादिभिस्तदभिन्नजीवानां तद्वत्त्वपक्षे
फलितमाह **तथा च जीवस्येति** । वस्तुतो ब्रह्माऽभिन्नस्यापि जीवस्याव-
च्छिन्नतया न ब्रह्मधर्मवत्ता । ब्रह्म तु सर्वात्मत्वाज्जीवलिङ्गैस्तद्वद् जीव-
लिङ्गवदिति । पक्षे लाभमाह **तथा च ब्रह्मलिङ्गानामिति** । ज्ञायमानेन
समारोप्यरूपेणाधिष्ठानविषयो रूपवान् भवेत्तस्याज्ञायमानत्वेन समारोपकाले
ऽपि सत्त्वात् । विषयस्य तु रूपेणासाधारणेन ज्ञायमानेन समारोप्यं न रूप-

* जै॰ सू॰ अ॰ १ पा॰ २ सू॰ २६–३० अत्राय विषयो द्रष्टव्यः ।

† उक्ता ऽस्त्यति २ पृ॰ पं॰ ।

यदधिष्ठानाऽसाधारणरूपज्ञाने सति समारोप्याभावादित्यर्थः । प्रस्तुते ऽधिष्ठा-
१६४ । १७ नासाधारणरूपज्ञानमस्तीत्याह **तस्मादिति** । ननु यद्युक्तरीत्या मनोमय-
वाक्ये ऽपि ब्रह्मलिङ्गानन्यप्रतीतिस्तर्हि कथं भाष्यकारः सूत्रविवरणावसरे इह
च सर्वं खल्विदं ब्रह्मेति वाक्योपक्रमे श्रुतमित्येवाह न पुनर्वाक्यशेषे ऽपि
सर्वकाम इत्यादिधर्मवत्तया श्रुतमित्यत आह **एतदुपलक्षणायेति** ।
भाष्ये त्वपौरुषेयशब्देन न कर्त्रभाव उक्तः किं तु पुंस्वातन्त्र्याभावः । विव-
क्षाभावाभिधानमपि स्वातन्त्र्यनिषेधार्थमित्याह **तथा चेति** । उपादानेन
फलेनेति भाष्ये उपादानं नाम परिग्रहो न तूपादेयत्वमुद्देश्यप्रतियोगि ।
विपक्षे दण्डमाह **अन्यथेति** । किं चिद्विधातुं सिद्धवन्निर्दिश्यमुद्देश्यत्वम् ।
अनुष्ठेयत्वेन निर्दिश्यत्वमुपादेयत्वम् । उद्देश्याऽविवक्षायां ग्रहं संमार्ष्टीत्यत्रोद्दे-
श्यग्रहस्याविवक्षा स्यात्तया च चमसादेरपि संमार्गप्रसङ्गः स चायुक्तः ।

चमसाधिकरणे* हि प्रकृतयागसंबन्धिसोमपात्रस्याविशेषेण† ग्रहप-
दस्य चोपलक्षणार्थत्वेन चमसानामपि संमार्गमाशङ्क्य सिद्धान्तितं केवलं संमा-
र्गविध्ययोगादुद्देश्येन भाव्यं तच्च ग्रहशब्देन समर्पितम् । न च चमसलक्षणार्थो
ग्रहशब्दः । यागावान्तराऽपूर्वसाधनत्वस्या‡न्तरङ्गस्य तेन लक्ष्यमाणत्वात् ।
व्रीहियवयोस्त्ववान्तराऽपूर्वभेदाभावाद्व्रीहीन् प्रोक्षतीत्यत्र व्रीहिशब्दो यवोपल-
क्षणार्थ इति युक्तम् । ततश्च ग्रहेष्वेव संमार्ग इति ।

ननु परिग्रह उद्देश्यत्वेन विधिपरिगृहीतस्तर्हि तदेकत्वमपि पश्वेकत्व-
१६५ । ४ वद्विवक्षितं स्यादत आह **सङ्गतं त्विति** । ग्रहगतं त्वेकत्वं ग्रहाऽन्यत्यवच्छे-
दकत्वेन रूपेण न विवक्षितम् । युक्ता हि पशुना यजेतेत्यत्रोपादेयविशेषणत्वा-
देकत्वविवक्षा । एकप्रसरतया एकपशुविशिष्टयागविधिसम्भवात् । अत्र तु ग्रह-
त्वैकत्वोद्देशेन संमार्गविधावुद्दिश्यमानयोः परस्परमसंबन्धाद्ग्रहे ग्रहोद्देश्येन
पर्यवसानाच्च प्रत्युद्देश्यं वाक्यपरिसमाप्तिः स्याद् ग्रहं संमार्ष्टि तं चैकमिति ततश्च
वाक्यभेद इत्यर्थः । वेदे ऽप्युपादेयत्वेनाभिमतं विवक्षितमित्यादि भाष्ये विव-
क्षिताऽविवक्षितशब्दनिर्दिष्टेच्छाऽनिच्छे गौण्या वृत्त्या इत्याह **इच्छाऽनिच्छे
चेति** । **को गुण इति** । स भाष्योक्त इत्याह **तदिदमिति** । जीवस्य

* जै. सू. अ ३ पा १ सू १३-१५ ।
† सोमाधारस्याऽविशेषेणेति २ पु पा । ‡ साधनस्येति ३ पु पा ।

१६६ । १९ **अत्ता चराऽचरग्रहणात् ॥ ९ ॥**

यस्य मृत्युरुपसेचनमोदनमिव घृतवत् । तं नाविरतो दुश्चरितादिति पूर्वमन्त्रप्रकाशितोपायवानन्यथा वेद इत्थमन्यस्तद्रहितः को वेद । यत्र सोऽत्ता कारणरूपो वर्तते तं निर्विशेषमात्मानं को वेदेत्यर्थः । पूर्वाधिकरणान्ते परमेश्वरस्याऽभोक्तृतोक्तेरिह न सोऽत्तेति सङ्गतिः । विषयवाक्ये अत्तृश्रवणादत्तेति सूत्रायोगमाशङ्क्याह **अत्र चेति** । भोक्तृत्वलक्षणमत्तृत्वं नाग्निपरमात्मसाधारणम् । कथं संशय इत्याशङ्क्याह **अत्तृत्वं चेति** । यदा भोक्तृत्वमत्तृत्वं तदा न परमात्मशङ्केत्याह **न च प्रस्तुतस्यापीति** । **तयोरन्य इति** । जीवात्मनो भोक्तृत्वप्रतिपादनाच्च न परमात्मशङ्केत्यर्थः । फलितमाह **तस्मादिति** । ब्रह्मक्षत्रादिनिर्दिष्टभोक्तृत्वमत्तृ इह न निश्चितमपि तु जीवपूर्वपक्षवादिना प्रसाध्यमित्यर्थो यदिकारः । ननु जीवस्य कथं ब्रह्मक्षत्रादिभोक्तृत्वं पूर्वपक्षिणा साध्यमत आह **ब्रह्मक्षत्रादि चेति** । स्वशरीरं भोगायतनम् । छागादि कस्य चिद्भोग्यम् । यदि न भोक्तृत्वात्संशयः कुत-

१६७ । ८ स्तर्ह्यत आह **अथ त्विति** । अत एव पूर्वमुक्तं संशयमित्युक्तम् । अत च भवति संशय इति उक्तम् । **भोक्तृतेति** । अत्तृतेत्यर्थः । वनितादिषु भोक्तृत्वे ऽपि संहर्तृत्वाभावात् । अत्तृत्वस्य भोक्तृत्वात्मत्वप्रसाधनेन पूर्वपक्षमुपपादयति **अत्रौदनस्येत्यादिना** । ओदनस्य भोग्यत्वात्प्रथमं भोक्तृत्व*प्रतीतिरित्यत्र संभ्रमात् भारतीविलासः । न हि मुख्य ओदनो ब्रह्मक्षत्रे न चोपचरितौदनाद्भोक्तृत्वप्रतीतिः । यदाह ।

उपमैव तिरोभूतभेदा रूपकमिष्यते ।

अलङ्कारो रूपकाख्यः कठवल्लीकवेरयम् ॥ इति ।

अथोच्यते । ओदनभोक्तर्यनौदनयोर्ब्रह्मक्षत्रयोरोदनत्वेन रूपकमवकल्पते । यथा यस्य मृगयाविनोदमृगाः पर†नरपतय इत्युक्ते क्षत्रिय एव प्रतीयते न अक्षत्रियः कश्चिद् ब्राह्मण एवमिहेति । ननु प्रलये जीवनाशात्कथमत्तृत्वमत आह **संहारेति** । संस्कार उपलक्षणमविद्यायाः । अविक्रियस्य

१९ । १४ परमात्मनः संहर्तृत्वायोगात् अग्निरेव संहर्तेत्याह **यदि त्विति** । तथापि

---

* भोक्तीति १ पु. पा. । प्रथमं ‡ इति । † नरपतय २-३ पु. पा. ।
‡ मरणवर्ती ४ पु. पा. ।

भाक्त ओदनशब्दः स ममापीत्याह न तर्हीति । कस्तर्ह्योदनस्तत्राह अपि त्विति । ओदन इत्यनुषङ्गः । अपि चौदनशब्दस्य लाक्षणिकस्य संनिहितमृत्यूपसेचनपदानुसारेणौदनगतविनाशित्वधर्मलक्षणार्थत्वाद् ब्रह्मक्षत्रोपलक्षितजगद्विनाशकर्तेश्वरः प्रतीयते न जीव इत्याह न चेत्यादिना । यद्वाद्योदनपदात् प्रथमं भोक्ता भातीति अत्राह न चौदनपदादित्यादिना । ओदनपदस्य भक्तवाचिनो भोग्यमात्रपरत्वेन तत्रापि जघन्यवृत्त्याश्रयणात्तद्गुणाद् ब्रह्मक्षत्रमृत्युश्रुतीनां न सङ्कोच इत्यर्थः । यदि मृत्युपदाद्विनाशिवस्तुविवक्षा कथं तर्हि ब्रह्मक्षत्रग्रहणमत आह प्राणिष्विति । ननु ब्रह्मक्षत्राख्यामितरव्यावृत्त्यर्थत्वं वाक्यस्य किं न स्यादत आह अन्यानिवृत्तेरिति । पञ्चपञ्चनखादौ हि मनुष्यादिनिवृत्तिः परिसंख्याफलम् । तत्र चानर्थनिवृत्तिः । इहान्यनिवृत्तिरनर्थिका पुरुषार्थविशेषाऽनवगमादित्यर्थः । मायोपाधेः परस्यास्ति संहर्तृत्वमित्याह तथा चेति* ॥

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥

१६८ । १८

ननु लक्षणया पिबदपिबतोः पिबन्ताविति निर्देशोपपत्तेः पूर्वपक्षसिद्धान्तपक्षाऽऽक्षेपे च वाक्यस्य निर्विषयत्वप्रसङ्गाद् आक्षेपायोगमाशङ्क्याह औत्सर्गिकस्येति । अयं हि आक्षेप्ता पिबन्ताविति अस्य मुख्यमर्थम् औत्सर्गिकमबाध्यं मन्यते प्राकृतसुपर्णविषयत्वं च वाक्यस्य पक्षान्तरं कल्पयिष्यत इति मन्यतेऽत आक्षेप इत्यर्थः । लक्षणां चक्रु मुख्यार्थाऽयोगमाह अध्यात्मेत्यादिना । अन्यौ पातारौ पक्षिणौ न शक्यौ कल्पयितुं चेत्तर्हि बुद्धिजीवौ जीवपरौ स्तो नेत्याह बुद्धेरित्यादिना । सृष्टीरुपदधातीति समाम्नायेकया ऽस्तुवत प्रजा अधीयन्त प्रजापतिरधिपतिरासीत्† तिसृभिरस्तुवत ब्रह्मासृज्यतेत्यादयः सृष्टसृष्टिमन्त्रा आम्नातास्तत्र सृष्टीरुपदधातीति यदि सृष्टिमन्त्रकेष्टकानामुपधाने विधानं तर्हीष्टकासु सृष्टसृष्टिमन्त्रकत्वविशेषस्याद्याप्यनवगमात्सर्वा यत्र सृष्टिमन्त्रकास्तत्र सृष्टिपदरहितमन्त्राणामानर्थक्यं स्यात्तन्मा भूदिति सृष्टिशब्दः सृष्टसृष्टिसमुदायं लक्षयित्वा तत्समुदायिनः सर्वान्मन्त्रान् लक्षयति एवमत्रापि पिबच्छब्दः स्वार्थस्याऽपिब-

१६९ । ७

* अत्र द्वितीयम् अत्त्रधिकरणं सम्पूर्णम् । तत्र सूत्रे २—अत्ता चराचरग्रहणात् ९ प्रकरणाच्च १० ॥

† प्रजापतिरधिपतिरासीदिति नास्ति ३ पु ।

त्संसृष्टतां पिबदपिबत्समुदायमिति यावत्तं लक्षयन्स्वार्थं पिबन्तमजहदितरेतरयोगलक्षणं समुदायं प्रति समुदायीभूतपिबदपिबत्परो भवति न पिबत्येव वर्तते नापि लक्षयन् गङ्गाशब्दवत्स्वार्थं त्यजेदित्यर्थः ।

१६९ । १० **अस्तु वेति** । प्रत्ययस्य मुख्यत्वम् प्रकृतिस्तु पिबतिः स्थालीन्यायेन पाययन्तं लक्षयतीत्यर्थः । बुद्धिक्षेत्रज्ञपक्षे तु बुद्धौ प्रकृतिर्मुख्या प्रत्ययस्तु बुद्धिजीवगतं कर्तृकरणमाधारणाकारकत्वमात्र लक्षयतीत्याह **एवमिति** । अथ पूर्वोत्तरपक्षयोर्लक्षणासाम्यात् संशयः पूर्वत्र ब्रह्मक्षत्रशब्दस्य संनिहितमृत्युपदानुसारेणाऽनित्यवस्तुपरत्ववदिहापि पिबच्छब्दस्य संनिहितगुहाप्रविष्टादिपदानुसाराद्* बुद्धिक्षेत्रज्ञपरत्वमित्याह **नियतेति** । अस्य जीवस्य या द्वितीयता द्वित्वाधारता सा ब्रह्मणैव तद्धि चेतनत्वात्समरूपं न तु बुद्ध्या तस्या अचेतनत्वेन विसदृशत्वादित्याह **अतपानेनेति** । ननु संनिहितगुहाप्रविष्टपदाद्बुद्धिर्द्वितीया किं न स्यादत आह **प्रथमामिति** । **वचनविरोधे इति** । अत्तीत्यस्य मुख्यकर्तृत्वसम्भवे करणे कर्तृत्वोपचारो न युक्त इति न्यायस्य बुद्धिजीवपरत्वेन मन्त्रव्याख्यायकब्राह्मणविरोधे आभासत्वमित्यर्थः । **आध्वंसत इति** आगच्छतीति । चेतनस्य क्षेत्रज्ञस्याऽभोक्तृत्वं ब्रह्मस्वभावतां वक्ष्यामीति

१७२ । ३ श्रुतिः प्रवृत्तेति भाष्यमुपपादयन्मन्त्रार्थमाह **अनश्नन्निति** । बुद्धेरन्यो यो जीवः सोऽनश्नन्नभोक्ता ब्रह्म सन्नभिपश्यतीत्यर्थः । अस्मिन्स्वोक्तेऽर्थे स्वयमेव श्रुतिरनुपपत्तिं शङ्कते तत्साह **यदीति** । चितेः छाया चित्प्रतिबिम्बं तद्वापन्नेति । सुकृतस्य कर्मणः ऋतं सत्यमवश्यम्भावित्वात् फलं पिबन्ताविति संबन्धः । लोके शरीरे । गुहां गुहायां बुद्धौ । परमे बाह्याकाशापेक्षया प्रकृष्टे हार्द्दे नभसि परस्य ब्रह्मणोऽर्द्धे स्थाने चिर्नाचिकेतोऽग्निश्चितो यैस्ते तथोक्ताः । तं दुर्दर्शमिति । गूढं छन्नं यथा भवति तथाऽनुप्रविष्टम् । कुत्यत आह गुहाहितं बुद्धौ स्थितं गह्वरे अनेकानर्थसङ्कटे† तिष्ठतीति तथोक्तः । पुराणं चिरन्तनं विषयाद्व्यावर्त्यात्मनि मनसो योजनमध्यात्मयोगः तस्याधिगमेन प्राप्त्या मत्वा साक्षात्कृत्य । मुण्डके द्वा सुपर्णेति । द्वौ सुपर्णसाम्यात्‡ सुपर्णौ सयुजौ सर्वदा सहयुक्तौ सखायौ समा-

---

* अनुसारेणेति २ पु. पा. । † संकटे इति २ पु. पा. ।
‡ साम्यादिति २ पु. पा. ।

माख्यानौ स्वप्रकाशरूपत्वा*त्समानमेकम् उच्छेद्यत्वाद् वृक्षं शरीरं परिष्व-क्तवन्तौ । अन्य एकः पिप्पलं कर्मफलं संसारस्याश्वत्थत्वेन रूपितत्वात्| । समाने वृक्षइति न कस्य चित्समर्थो ऽहं दीन इति सम्भावना ऽनीशा जुष्टम-नेकैर्योगमार्गैः सेवितम् । अन्यं प्रपञ्चविलक्षणम् । ईशं यदा पश्यति प्रपञ्चं च महिमानं विभूतिं मायामयीमस्यैवेति यदा पश्यति तदा वीतशोको भवति‡ ॥

## अन्तर उपपत्तेः ॥ १३ ॥

१७२ । १२

(अथ च दर्शनस्य लौकिकत्वशास्त्रीयत्वाभ्यां संशयः)ꣳ । इयं च सुखविशिष्टब्रह्मप्रकरणं नास्तीति कृत्वा चिन्ता । अतश्च वक्ष्यमाणः| सर्वना-मार्थः । स च मनोमयतद्भिन्नार्थवद् न संदिग्धो दृश्यतइत्यस्य निश्चा-यकत्वादित्याह एष इति । उपक्रमवशादित्यनेन सङ्गतिश्चोक्ता । गतं श्लोकं विभजते कनीमिति । कनीनिका ऽक्षितारकम् । भिन्नवक्तृत्वेन वा-क्ययोर्न नियम्यनियामकत्वं चेत्कथं तर्ह्यग्निभिर्गोतिं वक्तारोति शेषाद्वारः कृतो ऽत आह आचार्यस्त्विति । बाधकान्तरेति । अनर्थाभ्यतेरसम्भ-वाच्चेति सूचितबाधकान्तरदर्शनाय चेत्यर्थः । नन्वक्षणीत्याधारनिर्देशाद् जीव-देवते किं न स्तामत आह अन्तस्तद्धर्मेति । य एष इत्यादिः प्रथमश्रु-तस्यापि सापेक्षत्वान्न चाक्षुषत्वसमर्पकत्वमित्याह अनिष्पन्नेति । य एष इति श्लोकः पूरितः । य इत्येष इति च सर्वनामनी विशेषापेक्षत्वात्सतो निष्पन्नाभिधाने । अनिष्पन्नमपर्यवसितमभिधानं ययोस्ते तथा । ततश्च संनि हित॰पुरुषादिपदस्यार्थं विशेष्यं प्राप्याभिधातृणी वाचके भवेताम । किमतो ऽत आह संनिहितारश्चेति । कुतस्तदर्थस्य अपरोक्षता चाक्षुषतेत्यर्थः । स्वरसत इति । अनेन छायात्मनि योजनाक्लेशो वारितः । व्याख्यातं चेति । अधिकरणारम्भभाष्येणेत्यर्थः । तदुपादने सिद्धवदिति । तद्व्या-ख्याति विदुष इति । विदुषो विषयस्तेन निष्पादा शास्त्राद् योपलब्धिः सा परोक्षा ऽपि प्रत्यक्षेति स्तूयतइत्यर्थः । उपचारे निमित्तमाह दृढतरेति ।

१७३ । १२

* स्वप्रकाशत्वादिति ३ पु॰ पा॰ । | निरूपितत्वादिति २ पु॰ पा॰ ।

‡ अत्र तृतीय गुहाप्रवेशाधिकरणं संपूर्णम् । तत्र सूत्रे -- गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ११ विशेषणाच्च १२ ॥ ꣳ ( ) एतन्मध्यगो ग्रन्थो नास्ति १ पु॰ ।

| वक्ष्यमाणमिति ३ पु॰ पा॰ । ॰ ते हि संनिहितेति २ पु॰ पा॰ ।

एतं संयद्वाम इत्याचक्षते एतं हि सर्वाणि वामान्यभिसंयन्तीति श्रुतिमीश्व-
१७४ । १८ रस्य फलभोक्तृत्वभ्रमव्यावर्तनेन व्याचष्टे **वननीयानीति**। जीवाग्प्रति
सङ्गच्छमानानि यानि वामानि तानि येन हेतुना सङ्गच्छन्ते स संयद्वामः।
एतं हीत्यस्यैतं निमित्तीकृत्येत्यर्थः। एष उ एव वामनीरित्यस्यार्थमाह
**स एवेति**। संयद्वामत्वं फलोत्पादकत्वमात्रं वामनीत्वं तुल्यप्रापकत्व-
मिति भेदः। एकस्थाननियमः स्थानान्तराऽव्यापकत्वम्। कमलस्य गोत्रं*
कामलस्तस्यापत्यं† कामलायनः। दूनमानसं परितप्यमानसम्। **पृथिव्य-
ग्निरिति**। उपकोशलं गार्हपत्यो ऽनुशशास पृथिव्यग्निरन्नमादित्य इति
इमाभिश्चतस्रस्तनवो य एष आदित्ये पुरुषो दृश्यते सो ऽहमस्मीति। तथा
ऽन्वाहार्यपचनो ऽनुशशास आपो दिशो नक्षत्राणि चन्द्रमा इति मम तनवो
य एष चन्द्रमसि पुरुषो दृश्यते सो ऽहमस्मि तथा ऽऽहवनीयो ऽनुशशास
प्राण‡ आकाशो द्यौर्विद्युदिति मम तनवो य एष विद्युति पुरुषो दृश्यते
सो ऽहमस्मीति। **न चैतत्प्रतीकत्वमिष्टमिति**। एषा सोम्य§ आत्म-
विद्येत्यग्निभिः कं खं ब्रह्मेति विद्याया विद्यात्वेन परामर्शादित्यर्थः। भा-
ष्यगतसमयशब्दार्थमाह **लौकिकस्येति**। विशेषणविशेष्यभावो ऽर्थयोः
शब्दयोस्तु सामानाधिकरण्यम्। तथा च भाष्यायोगमाशङ्क्याह **तदर्थयो-
रिति**। सुखस्य वाचकः शब्दः सुखशब्दः। **किं चिदधिकमिति**।
अक्षिस्थानसंयद्वामादिगुणं च पूरयित्वेत्यर्थः। ह्रीणो लज्जावान्। अपत्रा-
१७९ । ७ याऽपहृत्य। **आवर्त्तमिति**॥ जन्माद्यावृत्तिं पुंसां करोति इत्यावर्तो मनुष्य-
लोक उच्यत इत्यर्थः। **अथोत्तरेणेति**। आत्मानं जगतः सूर्यं तपआ-
दिना सह अन्विष्याहमस्मीति विदित्वा तमभिजायन्ते प्राप्नुवन्ति। एतत्सू-
र्याख्यं ब्रह्म प्राणानां व्यष्टिभूतानां हिरण्यगर्भभूतं सद् आयतनम्। अग्निर-
र्चिर्देवता ज्योतिः सूर्यः। अहरादयो ऽपि देवताः¶॥

* गोत्रापत्यमिति २ पु. पा.। † कमलस्य गोत्रं कामलस्यापत्यमिति ३ पु. पा.।
‡ प्राणा इति २ पु. पा.। § सोम्येति ३ पु. पा.
॥ एतत्प्रतीकस्थाने तत्कर्तेति प्रतीकग्रहणं पु. २।

¶ अत्र चतुर्थम् अन्तराधिकरणं पूर्णम्। तत्र सूत्राणि ५-अन्तर उपपत्तेः १३ स्थाना-
दिव्यपदेशाच्च १४ सुखविशिष्टाभिधानादेव च १५ श्रुतोपनिषत्कगत्यभिधानाच्च
१६ अनवस्थितेरसम्भवाच्च नेतरः॥ १७॥

## अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥ १८० । ३

अशरीरस्य नियन्तृत्वासम्भवासम्भवाभ्यां संशयः । पूर्वत्र स्थाननिर्दे-
शोपपादनाय पृथिव्यादिस्थाननिर्देशो दृष्टान्ततस्तस्याक्षेपात्सङ्गतिः । अश-
रीरः परमात्मा नान्तर्यामी घटवत् । ननु स्वशरीरनियन्तरि शरीरान्तरर-
हिते तत्रापि अनैकान्तिकता ऽत आह **स्वकर्मेति** । न नियम्यातिरिक्त-
शरीरराहित्यं हेतुः किं तु शरीरेण भोक्तृत्वेनाऽनन्वयः । तथा तु स्वकर्म-
जदेहेन तादृक्संबन्धवानेव तं देहं तेन द्वारेणान्यच्च वास्यादि नियच्छतीति
न व्यभिचार इत्यर्थः । अचेतनत्वमुपाधिमाशङ्क्य मुक्ते चेतने साध्यवत्यु-
पाध्यभावात्साध्याऽव्याप्तिमभिप्रेत्याह **प्रवृत्तीति** । नियमनं शरीरिणो न
चेतनमात्रस्य मुक्ते तदभावादित्यर्थः । विपक्षे दण्डमाह **न हीति** । ननु
जन्मादिसूत्रे उभयकारणत्वप्रतिपादनान्नियन्तृत्वं सिद्धमत आह **तदनेनेति** ।
**पारिशेष्याज्जीव एवेति** । अन्तर्यामीति वक्ष्यमाणेन संबन्धः । पूर्वपक्ष-
मुपसंहरति **तस्मादिति** । किमशरीरत्वं यतो नियन्तृत्वाभावः । नियम्या- १८१ । १८
तिरिक्तदेहरहितत्वं वा देहसंबन्धाभावो वा देहे भोक्तृत्वाभावो वा । नाद्य
इत्याह **देहेति** । देहादौ निर्दिष्टे तत्स्वामी तच्चादिर्बुद्धिस्थो ऽस्येत्युक्तः ।
अथ वा तस्माज्जीवात्मैवेत्युपसंहारस्थो जीवात्मा परामृष्टः । अस्य स्वदे-
हादिनियमेन देहाद्यन्तरमतो ऽनैकान्तिकतेत्यर्थः । द्वितीयं शङ्कते **नादिति** ।
परस्यापि देहादिसंबन्धाभावो ऽसिद्ध इत्याह **तदविद्येति** । तद्विषयत्वा-
दविद्यायास्तद्विद्यात्वम् । तृतीये तु सोपाधिकतैव मुक्तस्य परभेदेन पक्ष-
त्वान्न साध्याव्याप्तिः । अतीतकालतां चाह **श्रुतीति** । यद्यपि जीवस्य
नियन्त्रन्तराभ्युपगमे ऽनवस्थेति तत्राह **न चेति** । औपाधिकस्य ह्यनौपाधि-
केश्वरनियम्यत्वमभ्युपेतं* नानुपहितेश्वरस्य नियन्त्रन्तरापादकमित्यर्थः ।
जीवपरभेदाभावे कथं लौकिकवैदिकव्यवहारा ऽत आह **अविद्याकल्पि-
तेति** । **एवं चेति** । बहुत्वाज्जीवानां नियम्याधिदैवादिषु प्रत्यभिज्ञा न
स्यादित्यर्थः । एकत्वे ऽन्तर्यामिण एकवचनश्रुतिमाह **एकवचनमिति** । १८२ । १४
**अभेदेपीति** । औपाधिकभेदाभावे ऽपीत्यर्थः । अधिकरणोपक्रमे विपर्यय-
वेचकमधिलोकमित्यादि भाष्यं तद्विभजते **पृथिव्यादीति** । यः पृथिव्यां

* अभ्युपगतमिति ड प ।

तिष्ठन्नित्युपक्रम्य माध्यन्दिनपाठे यः स्तनयित्नौ तिष्ठन्नित्यन्तं शारीरश्चोभयेपांति* सूत्रपातनिका । भाष्ये कर्तरीत्यात्मनीत्यर्थः । लौकिके कर्तरि डित्थे कार्यकरणसंघाते दर्शनादिवृत्त्यविरोधादित्याह **आत्मनीति** । पृथिव्यां तिष्ठन्नन्तर्यामीत्युक्ते पृथिव्यवयवस्याऽवयविनो ऽन्तर्यामित्वं स्यात्तन्निवृत्तये ऽन्तर इति । पृथिवीलेचत्ववारणाय न वेदेति । स ह्यहमस्मि पृथिवीति वेदानियम्यदेह एवान्तर्यामिणो देहो नान्य इत्याह **यस्येति** । अप्रतर्क्यः तर्काऽविषयः । अविज्ञेयं प्रमाणाऽविषयः । सर्वासु दिक्षु प्रसुप्तमिव† ॥

१८३ । १

## अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥

अदृश्यत्वादिसाधारणधर्मदर्शनात्संशयः । पूर्वत्र द्रष्टृत्वादिश्रवणान्न प्रधानमन्तर्यामीत्युक्तमिह तदश्रवणादक्षरं प्रधानमिति भाष्योक्तैव सङ्गतिः । पूर्वपक्षमाह **परिणाम इति** । योनिशब्दो निमित्तं चेदिति ब्रूयादित्यध्याहारः । न विलक्षणत्वा‡दित्यत्र परिणाममतं कृत्वाचिन्तया परिणामसारूप्ययोर्व्याप्तिर्निराकरिष्यते अत्र तु विवर्तदृश्ययोः । परिणामस्तु तत्रत्य इहानूदितः । भूतयोनिर्जडः परिणममानत्वाद्विवर्तमानत्वाद्वा संमतवदित्यर्थः । ननु परिणामिनः कथमक्षरशब्दवाच्यत्वमत आह **स्वविकारानिति** । अनुमानयोर्बाधमाशङ्क्याह **य इति** । अक्षरात्परादिति सामानाधिकरण्यम् । **नामरूपेति** । शब्दार्थयोर्बीजमधिष्ठानमात्मा तद्विषयतया तस्याधिष्ठानत्वे सहकारित्वेन शक्तिभूतं भूतानां सूक्ष्म कारणं तस्मिन् । संदेहभाष्यस्यप्रधानशब्दं वर्तयति **प्रधीयतइति** । क्रियतइत्यर्थः । अचेतनानामिति भाष्य

१८४ । १० न प्रायदर्शनमात्रपरमित्याह **सारूप्येति** । ननु न च स्मार्तमिति प्राच्याधिकरणे प्रधानं दूषितं द्रष्टृत्वाद्यसंभवन्यायसाम्यादचेतनमव्याकृतं दूषितप्रायमिति तच्छङ्का न युक्ता प्रधाने त्वप्रामाणिकत्वमधिकमिति शङ्कते **स्यादेतदिति** । बाधकं द्रष्टृत्वादि । ईक्षत्यादिचिन्तया ऽप्यपुनरुक्तिमाह **तेनेति** । उपचर्यतां ब्रह्मणो जगद्योनित्वमित्युक्तम् । उपचारे निमित्तमाह **अविद्येति** ।

* व्याससू० अ० १ पा० २ सू० २० ।

† अत्र पञ्चमम् अन्तर्याम्यधिकरणं सम्पूर्णम् । तत्र सूत्राणि ३-अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् १८ न च स्मार्तमतद्धर्माभिलापात् १९ शारीरश्चोभयेऽपि हि भेदेनैनमधीयते २० ॥

‡ व्या० सू० अ० २ पा० १ सू० ४ ।

अविद्याशक्त्या विषयीकृतत्वेन तदाश्रय इति तथोक्तम्। द्वितीयश्लोकस्य द्वितीयार्द्धं व्याचष्टे **अथेति**। सति चेतनपरत्वे वाक्यस्य ब्रह्मपरत्वं दुर्निवारमिति पूर्वपक्षाभावमाशङ्क्याह **ब्रह्मैवेति**। यदुक्तम् अक्षरात्परस्य सर्वज्ञत्वमक्षरं तु प्रधानमिति तन्नेत्याह **अक्षरस्येति**। यद्भूतयोनिम- १८४ । २॥ त्यक्षरस्य जगद्योनिभावमुक्त्वा यः सर्वज्ञ इत्युपक्रम्य तस्मान्नामरूपादि जायत इति जगद्योनिभाव उच्यते। उपादानप्रायपाठाच्च पञ्चम्या न निमित्तार्थत्व तत्र उपादानत्वप्रत्यभिज्ञानिर्द्दिष्टैकवाक्यत्वे सति वाक्यप्रमाणात् सर्वज्ञ एव भूतयोनिरित्यर्थः। विश्वयोनिर्यदक्षरं तत्सर्वविद्वेदेति विधीयते। यद्यक्षरशब्दवाच्यभूतयोनेः सर्वज्ञत्वं कथं तर्हि सर्वज्ञस्याक्षरात्परत्वमुक्त तत्राह **अक्षरादिति**। यद् यस्मादर्थे। न चाक्षरशब्दप्रत्यभिज्ञानाद् भूतयोनिरेवाक्षरादिति निर्द्दिष्टेति वाच्यम्। प्रथमश्रुते यः सर्वज्ञ इति वाक्ये सर्वज्ञस्य जगदुपादानत्वप्रत्यभिज्ञया ऽस्य वाक्यत्वादीनाक्षरं पुरुष वेद सत्यमिति पुरुषस्याक्षरशब्देन निर्द्दिश्यमानत्वाच्च। विवर्त्तस्त्विति श्लोकस्य द्वितीयार्द्धं व्याचष्टे **अपि चेति**। प्रयोजनमाह **ज्ञेयत्वेनेति**। भोगस्यातिरिक्त इति भाष्यस्य* व्याख्या **भोगा इति**। ननु ऋतुषु यजन्तीति कर्त्तरि क्विप सप्रसारणो ऋत्विक्शब्दः। यज्ञसंयोगे† गम्यमाने पतिशब्दप्रातिपदिकस्य नकारादेशः स इकारस्यान्त्यस्य ततो ङीपि कृते पत्नी। **उक्ताभिप्रायमिति**। विवर्त्तत्वेन सारूप्याऽनपेक्षेत्युक्तो ऽभिप्रायः। **प्रधानादित्य-** १८६ । १६ **र्थेति**। यद्यपि भाष्ये शारीरप्रधाननिराकरणतया हेतुद्वयं क्रमेण व्याख्यात तथापि पुरुषशब्दस्य प्रधानव्यावर्त्तकत्वादाद्यहेतुरपि प्रधानवारणार्थ इति। अक्षरमव्याकृतमित्यादिभाष्यस्यायमर्थः। शब्दार्थयोर्बीजमधिष्ठान तस्य शक्तिः सहकारित्वात्। सा चेश्वरमाश्रयते विषयीकरोतीति ईश्वराश्रया तस्याधिष्ठानत्वे उपाधिभूता ऽवच्छेदिका‡ शुक्तेरिव तद्विषयमज्ञानम्। अविकार इति च्छेदः। तस्माद्वाचस्पतिमतं भाष्यविरुद्धमिति केश्चिदयुक्तमुक्तम्। किञ्च।

अज्ञत्वभ्रान्तताद्दोषादरक्षत् परमेश्वरम्।
सतद्वाप्यार्थतत्त्वज्ञो वाचस्पतिरगाधधीः॥

* भाष्यपाठस्येति २-३ पु॰ पा॰। † सप्रयोगेति २ पु॰ पा॰।

‡ उपाधिभूतमवच्छेदकमिति २ पु॰ पा॰।

प्रधानस्यागमिकत्वे प्रकृतिविकारसारूप्यादि बहु समञ्जसं स्यादि-
१८६ । २० त्यर्थः । असमञ्जसमिति पाठे चेतनस्य जगदुपादानत्वादि* । रूपोपन्या-
सात्त्व† । नेतराविन्यनुषङ्गः । भाष्ये अदृश्यत्वादिधर्मकस्य न विग्रह इत्या-
क्षेपः । सर्वात्मत्वविवक्षयेति समाधानम् । जायमानसंनिधिलक्षणस्थानस्य
प्रकरणेन बाधमाशङ्क्य विग्रहवत्त्वलिङ्गेन प्रकरणबाधमाह नेति । ईश्वर-
स्यापि हिरण्यश्मश्रुत्वादिवद् मूर्द्धादिसंभव इति कश्चित् । तन्न । अपाणि-
पादमिति निर्विशेषस्य ज्ञेयत्वेन प्रक्रमाद्धिरण्मयस्योपास्यत्वेन विग्रहाद्य-
विरोधात् । प्राकृतपाण्यादिनिषेध एव इति चेन्न । प्रथमस्य चरमेणासंको-
चादिति । लिङ्गं सार्वात्म्यपरं न शरीरादिमत्त्वपरमित्याशङ्क्य तथा सति मूर्द्धा-
दिबहुश्रुतीनां बाधः स्यात्तास्तु प्रकरणाद्बलीयस्य इत्याह न चैतावतेति ।
प्रकरणमात्रेणेत्यर्थः । एवं च हृदयं विश्वमस्य एष सर्वभूतान्तरात्मेति
चात्र्ये सर्वनामनी संनिहिततरं विग्रहवन्तं गृह्णीतो न भूतयोनिमिति ।
लिङ्गनिरुद्धे प्रकरणे संनिधिर्विजयते इत्याह सिद्धे चेति । पुरुष एवे-
दमित्यादिसर्वरूपत्वोऽपन्यासो ऽपि द्युमूर्द्धादिकस्यैवास्तु तस्य संनिहित-
१८७ । १५ तरत्वादत आह प्रकरणादिति । संनिधेः प्रकरणस्य बलीयस्त्वात्पूर्वव-
द्बाधकलिङ्गाभावाच्चेत्यर्थः ।

ऊर्णनाभिर्लूताकीटस्तान्तून् सृजते संहरति च । सतो जीवतः ।
येन ज्ञानेन अक्षरं पुरुषं वेद तां ब्रह्मविद्यामुपसन्नाय प्रोवाच‖ प्रब्रू-
यात् । सर्वविद्यावेद्यवस्त्वधिष्ठानविषयत्वात्सर्वविद्याप्रतिष्ठा । कर्मनिर्मि-
तान् परीक्ष्य ब्राह्मणो निर्वेदमायात्कुर्यादित्यर्थः । गच्छेदिति वाक्यशे-
षात् वैराग्यहेतुमाह इह संसारे ऽकृतो लोको नास्ति । किं कृतेन कर्मणे-
त्यध्याहारः । अतो ऽकृतज्ञानार्थं दिवि स्वात्मनि प्रकाशरूपे भवो दिव्यः
बाह्याभ्यन्तरसहितः सर्वात्मेति यावत् । क्रियाविज्ञानशक्तिमन्मनःप्राणर-
हितः । बाह्येन्द्रियनिषेधो ऽप्युपलक्षितः । अत एव शुभ्रः शुद्धः । अग्नि-
र्द्यौः । असौ वाव लोको गौतमाग्निरिति श्रुतेः । स मूर्द्धा अस्येति सर्वत्र

* उपादानत्वादिरसमञ्जसं स्यादित्यर्थ इति २ पु॰ अधिकः पाठः ।
† व्या॰ सू॰ अ॰ १ पा॰ २ सू॰ २३ । इदमदृश्यत्वाद्यधिकरणान्तर्गतं सूत्रम्
‡ विग्रहस्त्वेति ३ पु॰ पा॰ । § सर्वरूपवत्त्वेति ३ पु॰ पा॰ ।
‖ प्रगृह्ये नास्ति ३ पु॰ ।

संबन्धः । यस्येत्यर्थे अस्यशब्दः । विवृता उद्घाटिताः प्रसिद्धाः वेदाः यस्य वाक् वायुर्यस्य प्राणः विश्वं यस्य हृदयं मनस्तन्मनसा सृष्टत्वाद् विश्वस्य पादरूपेण पृथिवी यस्य जाता एष सर्वभूतगतप्राणानां समष्टितया सर्वभूतान्तरात्मा । एतस्माज्जायते इत्यनुषङ्गः । तस्मात्परमात्मनो ऽग्निर्द्युलोको जायते यस्य* सूर्यः समिधः । असौ वाव लोको ऽग्निस्तस्यादित्य एव समिदिति श्रुतेः । स† दाधार दधार । कस्मै ब्रह्मणे‡ ॥

## वैश्वानरः साधारणशब्दविशेषात् ॥ २४ ॥

१८७ । १६

अथ वैश्वानरः किमनात्मा किं वा आत्मा अनात्मत्वे जाठरो ऽन्यो वा आत्मत्वे ऽपि जीवः परो वेति संदेहः§ ।

सार्वात्म्यरूपोपन्यासादत्तरं ब्रह्म वर्णितम् ।
जाठरादावनैकान्त्यशङ्का तस्य निरस्यते ॥

को न आत्मेत्युदाहरणभाष्यं छान्दोग्याख्यायिकार्थानुसन्धानेन व्याचष्टे **प्राचीनशालेत्यादिना** । उद्दालको ऽप्युपलक्ष्यते । जन इति कर्षिनामैव । **आत्मेत्युक्त इति** । ब्रह्मेत्युक्ते तत्पारोक्ष्यनिवृत्त्यर्थमात्मपदमित्यपि द्रष्टव्यम् । इक् स्मरणइत्यस्य रूपमध्येषीति । द्युमूर्धेत्यादिभाष्यमादाय व्याचष्टे **वैश्वानरस्येत्यादिना** । सुतेजस्त्वगुणा द्यौर्वैश्वानरस्य मूर्धा विश्वरूपत्वगुणः सूर्यः । एष शुक्ल एष नील इत्यादिश्रुतेः । स वैश्वानरस्य चक्षुः । पृथग्गतिमत्त्वगुणो वायुः प्राणः । बहुलत्वगुण आकाशो देहमध्यम् । रयिर्धनम् । तद्गुणा आपो बस्तिस्थम् उदकम् । तत्र पृथिव्यां वैश्वानरस्य प्रतिष्ठानात् । **मूर्धपातादिदूषणैरुपासनानां निन्दयति** । मूर्धा ते व्यपतिष्यदित्यादिनैकैकोपासननिन्दया तस्य ह वा एतस्येत्यादिना वैश्वानरस्य द्युलोकादयो मूर्धादय इति कथनेनावयविनः समस्तभावमुपदिशत्यर्थः । उपासक एव वैश्वानरो ऽहमिति मन्यतइति **वैश्वानरस्य भोक्तु**रित्युक्तम् । हृदयाद्धि

१८८ । १८

---

* तस्येति ३ पु० पा० ।    † स इति नास्ति २-३ पु ।

‡ अत्र षष्ठम् अदृश्यत्वाद्यधिकरणं पूर्णम् । तत्र सूत्राणि ३ अदृश्यत्वादिगुणको धर्मोक्तेः २१ विशेषणभेदव्यपदेशाभ्यां च नेतरौ २२ रूपोपन्यासाच्च २३ ॥

§ संशय इति २ पु पा० ।

मनः प्रणीतमिव । इतः प्रणयनावधित्वाद् हृदयं गार्हपत्यो ऽत एव तदनन्तरत्वान्मनो ऽन्वाहार्यपचन इत्याह **हृदयानन्तरमिति** ।

१८९ । ३ पूर्वपक्षमाक्षिपति **नन्वित्यादिना** । निश्चितार्थेच्छान्दोग्यवाक्येन तदेकार्थं वाजसनेयिवाक्यं निर्णीयते न विपर्यय इत्यत्र न्यायमाह **निश्चितार्थेन हीति** । यथा हि तं चतुर्धा कृत्वा बर्हिषदं करोतीति पुरोडाशमात्रचतुर्धाकरणवाक्यमेकार्थसंबन्धिना शाखान्तरीयेणाग्नेयं चतुर्धा करोतीति विशेषविषयत्वेन निश्चितार्थेनाग्नेय एव पुरोडाशो व्यवस्थाप्यते एवमत्रापीत्यर्थः । अथ दर्शपूर्णमासकर्मणः शाखाभेदे ऽप्यभेदात्तत्र तथा तदत्रापि सम*मित्याह **कर्मवदिति** । न केवलमुपक्रमाद् ब्रह्मनिर्णय उपसंहारादपीत्याह **न च मूर्धत्वादिकमित्यादिना** । प्रतीकोपदेशमुपाध्यवच्छिन्नस्योपास्त्युपदेशं च प्रपञ्चयति **तथा चेति** । पञ्चपादीकृतस्तु वाजसनेयिवाक्यस्याप्यात्मोपक्रमत्वलाभे किं शाखान्तरालोचनयेति पश्यन्तः

१९० । १७ पुरुषमनूद्य वैश्वानरत्वं विधेयमिति व्याचक्षते तद्दूषयति **अत एवेति** । यत एवान्तःप्रतिष्ठत्वेन सह समुच्चयः सूत्रगतापिशब्दार्थो ऽत एवान्तःप्रतिष्ठितत्ववत्पुरुषत्वमपि वैश्वानरमुद्दिश्य विधेयं न विपर्यय इत्यर्थः । यदि पुरुषमनूद्य वैश्वानरो विधीयते तदा पुरुषस्य दृष्ट्याश्रयत्वं स्यादित्याह **तथा सतीति** । किमतस्तत्राह **एवमिति** । न केवलं सूत्रविरोधो ऽपि तु भाष्यविरोधो ऽपीत्यर्थः । स यो हैतमिति वाक्ये प्रथमनिर्दिष्टाग्न्युद्देशेन पुरुषत्ववेदनं स एषो ऽग्निरिति वाक्यस्यार्थत्वेनानूद्यते तथा च तस्यायमेवार्थः स्थित इति श्रुतिविरोध इत्यर्थः । पुरुषस्य विधेयत्वे यच्छब्दायोगमाशङ्क्याह **तस्मादिति** । पञ्चपाद्यां तु जाठरे ईश्वरदृष्टिपक्षमुक्त्वा योगादग्निवैश्वानरशब्दयोरीश्वरे वृत्तिरिति पक्षान्तरं वक्तुमयम् उद्देश्यविधेयभावव्यत्यय आश्रित इति चिन्त्यमिदं दूषणमिति ।

मूर्धादिचिबुकान्तावयवेषु संपादितस्य कथं पुरुषविधत्वं तेषां पुरुषैकदेशत्वादित्याशङ्क्य वैश्वानरपुरुषस्य पादादिमूर्धान्तावयवानामेषु‡ संपादनात्पुरुषसादृश्यमित्याह **अत्रावयवसंपत्त्येति** । मूर्धचिबुकान्तरालस्थस्य

१९१ । १३ पुरुषावयवस्थत्वात्कथं पुरुषे ऽन्तःप्रतिष्ठितत्वमित्याशङ्क्याह **कार्य-**

* सामर्थ्यमिति २ पु॰ पा॰ । + वैश्वानरमिति ३ पु॰ पा॰ । ‡ एष्विति नास्ति २ पु॰

करणेति । कार्यकरणसमुदाय एव पुरुषस्तस्यावयवा मूर्द्धादिचिबुकान्ता-स्तेष्वन्तःप्रतिष्ठानात्पुरुषे ऽन्तःप्रतिष्ठितत्वम् । अत्र हेतुः समुदायेति । अवयविन्यवयवस्यान्तर्भावादवयवस्योप्यवयव्याश्रितो गृहस्य इव ग्रामस्थ इत्यर्थः । नन्ववयवाश्रितस्यावयव्याश्रितत्वव्यपदेशे दृष्टान्तो वक्तव्यो भाष्य-कारस्त्ववयवस्यावयविनिष्ठताव्यपदेशमुदाहरति ततो न निदर्शनतेत्याश-ङ्क्याह अत्रेवेति । शाखादीनां समुदाये प्रतिष्ठिता शाखा समुदायमध्यपा-तिनी भवेत् तावदेषां च मूर्द्धादिचिबुकान्तावयवानां कार्यकारणसमुदाया-न्तर्भावे निदर्शनम् । अवयवस्थस्य तु वैश्वानरस्यावयविपुरुषान्तःस्थत्वम-र्थादेव सिद्धतीत्यर्थः । विश्वेषां वा ऽयं नरो नेता कारणम् ।

भाष्ये वरणा नासीति निरुच्येति । इमामेव प्रसिद्धां भ्रूसहितां नासिकां वारयति नाशयतीति वरणासहिता नाशीति निरुच्येत्यर्थः । वरणाशब्दा-र्थमाह भ्रुरिति । अत्रिः किल याज्ञवल्क्यं पप्रच्छ य एषो ऽनन्तो ऽव्यक्त १९२ । १९ आत्मा तं कथं विजानीयामिति । प्रत्युवाचेतरः सो ऽविमुक्ते प्रतिष्ठित इति । अविमुक्तस्य स्थान*भूता का वै वरणा का च नाशीति । प्रश्नस्य प्रत्युक्तिः सर्वा-निन्द्रियकृतान् दोषान्वारयति तेन वरणेति । सर्वानिन्द्रियकृतान् पाप्मनो नाशयति तेन नाशीति । नियम्य जीवाधिष्ठानत्वद्वारेण नियन्तुरीश्वरस्याधि-ष्ठानत्वान्नासाभ्रुवोः पाप्मवारकत्वाद्युपपत्तिः । नासाभ्रुवोर्मध्ये ऽपि स्थानवि-शेषजिज्ञासया प्रश्नः कतमं चेति । भ्रूमध्यमाहेतरो भ्रुवोरिति । घ्राणस्य नासि-कायाः । स च संधिर्द्युलोकस्य स्वर्गस्य परस्य च ब्रह्मलोकस्य संधित्वेनो-पास्यः ।

केचित्तु उपासनाबुद्धिर्वारकत्वेन नाशकत्वेन च वरणा नाशी । सा हि प्रकृता न भ्रूभ्रुवोरिति द्विवचनेन† वक्ष्यमाणाया एकवचनायोगात् । अतः श्रुत्यनभिज्ञा वाचस्पतिरिति वदन्ति । तन्न । अत्र ह्युपासना स्वशब्देन न प्रकृता । तं कथं विजानीयामित्युपसर्जनं विज्ञानं प्रकृतमपि न स्त्रीलि-ङ्गनिर्देशार्हम् । ततः शब्दोपात्तभ्रूप्रातिपदिकार्थे शक्ति वरणाशब्द इति श्रुत्य-र्थज्ञो वाचस्पतिरेव । वैश्वानरमह्नां केतुं सूर्यं वैश्वानरस्य शोभनमतौ

* स्थानेनेति २ पु॰ पा॰ । † नाशीति इत्यपपाठः-३ पु॰ । एकमेव ,पि ।
‡ द्विवचनेनेति २-३ पा ।

विषया भवेम*। स ध कं सुखम्। अभिमुखा श्रीश्च। यो भानुरूपेण रोदसी द्यावापृथिव्यौ अन्तरिक्षं चाततान व्याप्तवान्। रोदसी एव दर्शयति इमां पृथिवीं द्यामिति। प्रादेशमात्रमिव देवाः सूर्योदये अभिसंपन्नाः प्राप्ता उपासनया यदा तदा ते सुविदिता भवन्ति। अहं कैकेयराजो† युष्मभ्यम् औपमन्यवादिभ्यः एतान् देवाँस्तथा वक्ष्यामि यथा प्रादेशमात्रमेवाभिसंपादयिष्यामि। अधोनोऽक्रान्तर्नोत्य स्थिता ऽतिष्ठा द्यौर्मूर्धाध्यात्ममारोप्या एवं सुतेजस्त्वादिगुणवन्तो वैश्वानरावयवा आदित्यादयश्चक्षुरादिष्वारोप्याः‡॥

इति श्रीमदनुभवानन्दपूज्यपादशिष्यपरमहंसपरिव्राजकभगवदमलानन्दकृते वेदान्तकल्पतरौ प्रथमाध्यायस्य द्वितीयः पादः॥

| | अस्मिन् पादे | आदितः |
|---|---|---|
| अधिकरणानि | ७ | १८ |
| सूत्राणि | ३२ | ६३ |

* भवेदिति ५ पु. पा.। † एतदग्रे य. इत्यधिकं २ पु.।

‡ अत्र सप्तमं वैश्वानराधिकरणं संपूर्णम्। तत्र सूत्राणि ८ वैश्वानरः साधारणशब्दविशेषात् २४ स्मर्यमाणमनुमानं स्यादिति २५ शब्दादिभ्यो ऽन्तः प्रतिष्ठानाचेति चेन्न तथा दृष्ट्युपदेशादसम्भवात् पुरुषमपि चैनमधीयते २६ अत एव न देवता भूतं च २७ साक्षादप्यविरोधं जैमिनिः २८ अभिव्यक्तेरित्याश्मरथ्यः २९ अनुस्मृतेर्बादरिः ३० सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ३१ आमनन्ति चैनमस्मिन् ३२॥

# अथ प्रथमाध्यायस्य तृतीयः पादः ।

## द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥

१९३ । १

निर्विशेषब्रह्मलिङ्गनिरूपणं पादार्थमाह **इहेति** । आद्याधिकरणमवतारयति **तत्रेति** । आयतनत्वसाधारणधर्मात् संदेहे पूर्वपक्षं संगृह्णाति **पारवत्त्वेनेति** । अमृतं यद् ब्रह्म तद् द्युभ्वाद्यायतनं क्वचित्कदाचिदपि न युक्तम् । आयतनस्य ब्रह्मत्वाभावे हेतुमाह **पारवत्त्वेनेति** । सेतुत्वस्य पारवत्त्वेन व्याप्तेर्ब्रह्मणश्चापारत्वादित्यर्थः । अमृतत्वाभावे हेतुमाह **भेदइति** । भेदे हि सति संबन्धार्था षष्ठी प्रयुज्यते ब्रह्म चामृतमिति नामृतस्येति षष्ठी युक्तेत्यर्थः । पारं परकूलम् । अवारमर्वाक्कूलम् । ननु षिञा बन्धनार्थात्सेतुशब्दव्युत्पत्तेर्जगन्मर्यादाया बन्धरि ब्रह्मणि प्रयोगः किं न स्यादत आह **न त्विति** । यत्र दारुणि छिद्रिते निधाय्याणां पादप्रासनं तद्धडिः । निगडः शृङ्खला । नन्वमृतमपि ब्रह्मामृतान्तरसंबन्धि नेत्याह **न च ब्रह्मण इति** । अतो ऽन्यदार्तमिति श्रुतेरित्यर्थः । पुरुषं प्रति यावत्तादात्म्यं तावद्गच्छद्वस्तुतः परिच्छिन्नं भवति पारवत् ।

**अथ त्विति** । साक्षादायतनत्वेन श्रुत्युक्तमिति योजना । अव्याकृतं हि कारणब्रह्मोपाधित्वेन प्रतिपाद्यते न प्राधान्येनेति । **तस्य हि कार्यत्वेनेति** । देहाद्यवच्छिन्नरूपेणेत्यर्थः । **धारणादिति** । अस्य द्युभ्वाद्यायतनस्यास्य वा तज्ज्ञानस्य यथाक्रमममृतत्वस्य धारणात् साधनाद्वा सेतुता । यद्यपि ब्रह्मैवामृतं तथापि तदज्ञानं न मोक्ष इति ज्ञायमानत्वदशा* ऽभिप्रेत्य धारयितृत्वम् । अत एव षष्ठी । नन्वेवं रूढिर्गतेत्याशङ्क्य साम्यमाह **पूर्वपक्षे ऽपीति** । **पारवत्तावर्जं** पारवत्तां वर्जयित्वा । **योगमात्रादिति** । षिञ्धात्वर्थयोगादित्यर्थः ।

१९४ । ३

विधारकत्वमेव सेतुगुणो ऽपि स्यात्तया च पारवत्तया गौणी वृत्तौ †स्वत्यागेन प्रवृत्ता योगाद् बलिनीति च न शङ्क्यमिति । अमृतस्य ब्रह्मणो हेत्वभावात्साधनत्वं ज्ञानस्यायुक्तमित्याशङ्क्याविद्यानिवृत्तिरमृतत्वं शब्दार्थ

* ज्ञायमानदशामिति २-३ पु. पा. । † स्वेति नास्ति २ पु.

इत्याह अमृतशब्दश्चेति । द्वयोरेकस्य च संख्येयानामुपादाने तेषां बहुत्वाद् द्व्येकेष्विति स्यात् । नानार्थसाधारण्येन सकृदुच्चारणमिह तन्त्रम् एवं चावृत्तिलक्षणवाक्यभेदो व्युदस्त: । अस्य ब्रह्मण: स्वीया: शब्दा एते इत्यर्थ: । तत्र त्वायतनवद्भावश्रवणादिति भाष्यं द्युभ्वाद्यायतनस्य* ब्रह्मत्वे सिद्धे तस्य सविशेषत्वनिरासार्थं सत्प्रधानवादनिरासानुपयोगित्वात्प्रकृतासङ्गतमित्याशङ्क्य

१९५ । ८ हिरण्यगर्भपूर्वपक्षनिरासार्थत्वेन प्रकृतेन† सङ्गमयति स्यादेतदित्यादिना । अप्रधानं ज्ञानं न सर्वनामपरामर्शार्हमिति कश्चित्तं प्रत्याह न चेति ।

यत्तु केन चिदुक्तं तं जानथेति ज्ञेयं प्रत्युपसर्जनं ज्ञानमेव इति पुंलिङ्गनिर्देशानर्हं चेति । तन्न । सत्यपि ज्ञेयप्राधान्यनिर्देशे ज्ञानस्य फलसाधनत्वेन गुणकर्मत्वाभावात्प्राधान्यात् । पुंलिङ्गं तु विधेयसापेक्षमिति न किं चिदेतत् । तप्ते पयसि दध्यानयति सा वैश्वदेव्या‡मिक्षेत्यादौ शब्दतोऽप्रधानस्यापि पयआदे: सर्वनामनिर्देशादनियतं सर्वनाम्न: प्रधानपरामर्शित्वमित्याह न चेति ।

अविद्यारागद्वेषादीति भाष्ये आदिग्रहणेन प्राङ्निर्दिष्टभयमोहावुक्तौ । एते ऽविद्यादय: श्रुतौ हृदयग्रन्थिशब्दार्थ इत्याह हृदयग्रन्थिश्चेति । अज्ञानस्याविद्याशब्देन निर्दिष्टत्वान्मोहश्च विषाद: शोक इति च

१९६ । १२ विषादव्याख्या । परावर इति प्रतिपदं व्याचष्टे परमिति । भाष्ये सूत्रोपात्तमुक्तपदव्याख्यानाय भिद्यते हृदयग्रन्थिरिति मन्त्रमुदाहृत्य ज्ञानादज्ञाननिवृत्तौ ब्रह्मण: प्राप्यत्वमुपसृप्यपदार्थ इति च वक्तुं§ तथा विद्वानिति मन्त्र उदाहृतस्तत्रश्चोत्तरमन्त्रे विद्वानित्यभिधास्यमानं ज्ञानं पूर्वमन्त्रे भिद्यत इत्यादिकर्मसंयोगे निमित्तार्थया दृष्टे इति सप्तम्या निर्दिष्टम् । निष्ठा च भावे । दर्शनार्थश्चाविद्यादे: परोक्षज्ञानाच्छित्तिर्नाभात्रे भिद्यतइत्यादिनोक्त इत्यभिप्रेत्येत्याह तस्मिन्ब्रह्मण्येति । उत्तरमन्त्रस्थनामरूपशब्दार्थमाह नामेति ।

यत्तु कश्चिदाह सूत्रेणाऽनिरस्तत्वान्न वाय्वादिपूर्वपक्ष इति तत्राह

,, । १८ नाव्याकृतमित्यपीति । साधारणहेतुनिर्देशाद्‖ अव्याकृतवादाद्यपि

---

* द्युभ्वायतनस्येति २ पु. पा. ।
† प्रकृतेनेति नास्ति २ पु. ।
‡ वैश्वदेवीति नास्ति ३ पु. ।
§ इति च वक्तुमिति १ पु. पा. ।
‖ हेतुदर्शनादिति ३ पु. पा. ।

पूर्वपक्षत्वेन सूचितमित्यर्थः । न चोपाधिपरिच्छिन्नस्येति भाष्ये च-
कारप्रयोगात्सोऽपि चशब्दव्याख्यानत्वभ्रममपाकरोति चेनेति । जीवात्मैव द्यु-
भ्वाद्यायतनमिति न वाच्यमित्यन्वयः । (जीवात्माधिगमार्थेति ।
प्रसिद्धं जीवस्वरूपमनूद्य तस्य पारमार्थिकस्वरूपाधिगमायेत्यर्थः ।* । प्रकरणेन
पठितमिति कृत्वा चिन्ता न युक्ता प्रकरणादिति सूत्रादिति केन चिद्युक्त
मुक्तं कृत्वा चिन्तोद्घाटनार्थत्वात्सूत्रस्य । इदं विश्वं पुरुष एव यस्मि-
न्पृथिव्याद्योतं समाश्रितं किं तदिति अत आह कर्माग्निहोत्रादि तपो ज्ञा-
नम् अर्थात्तत्फलं च । स च पुरुषः परामृतं ब्रह्म† ॥

## भूमा संप्रसादादध्युपदेशात् ॥ ८ ॥ १९८ । ८

आत्मशब्दाद् द्युभ्वाद्यायतनं ब्रह्मेत्युक्तम् । तत्रात्मशब्दः प्राणे
ऽनैकान्तः । तरति शोकमात्मविदित्यत्राव्यवहितप्राणे प्रयोगादित्याक्षेपिकी
सङ्गतिः । आख्यायिकामर्थतोऽनुक्रामन् विषयं विविनक्ति नारद इत्या-
दिना । आजानसिद्धं स्वभावसिद्धम् । भगवन्तमुपसद्य यदुवाच तदाह
अनात्मज्ञेनेति । प्राणेषु पर्यवसिते भूयसि बहुतरे प्रश्नान्तरे इत्यन्वयः ।
तेजो वा अद्भ्यो भूय इत्यत्र वायुरपि ग्राह्य इत्याह वायुसहितेनेति
संकल्पादिपदार्थान् व्याचष्टे कर्तव्यमित्यादिना ।

पूर्वापरेति । पूर्वं चापरे च विषया निमित्तं यस्य प्रयोजनस्य ... । १८
तन्निरूपणमित्यर्थः । ऋग्वेदादिनो वाङ् नाम्नो भूयसी । वाक्प्रवृत्त्या-
द्वारो मनो भूयः । कुर्यामिति निश्चयस्य मनसः कर्तव्यादिविवेकः संकल्प-
कारणम् । तस्य चातीतादिविषयसाध्यप्रयोजनज्ञानं चित्तम् । तस्मादपि
लौकिकविषयाच्छास्त्रीयदेवतादैकाग्र्यं ध्यानं फलतो भूयः । ध्यानस्य
विज्ञानं शास्त्रीयं कारणं तस्य मनोगतं बलं प्रतिभानसामर्थ्यं कारणम्§ ।
तस्याद्यमानमन्नम् । तस्यापः । तत्रमाकाशपर्यन्तं ज्ञेयम् । आकाशस्य
भोग्यत्वे स्मरः स्मरणम् । तस्याशा तया ह्यपि तात्पर्येण स्मरति । प्राणो

* ( ) एतदन्तर्गतो ग्रन्थो न दृश्यते १-३ पु । † छा० स० ३ १ पा० ३ सू० ८ ।

‡ अत्र प्रथमं द्युभ्वाद्यधिकरणं समाप्तम् । तत्र सूत्राणि ७—द्युभ्वाद्यायतनं स्वश-
ब्दात् १ मुक्तोपसृप्यव्यपदेशात् २ नानुमानमतच्छब्दात् ३ प्राणभृच्च ४ भेदव्यप-
देशात् ५ प्रकरणात् ६ स्थित्यदनाभ्यां च ७ ॥ § कारणमिति नास्ति ३ पु० ।

नामाद्याशान्तसर्वहेतुतया भूयानित्युत्तरोत्तरभूयस्त्वं द्रष्टव्यम् । भवतु प्राणे प्रश्नप्रत्युक्तिपर्यवसानं तथापि न तस्य भूमत्वशङ्का एष त्विति तुशब्देन ग्रन्थं विच्छिद्य भूमोपदेशादित्याशङ्क्य विषयप्रदर्शनावसरएव संशयोपयोगितया पूर्वपक्षसम्भावनामाह **प्राणस्येति** । सर्वात्मत्व*लिङ्गात् प्राण एव भूमा तुशब्दस्तु सत्यप्राणवेदिन एव नामाद्यतिवादित्वाद्विशेषार्थ इति संभवः पूर्वपक्षस्येत्यर्थः ।

१९८ । २२ प्राणस्य भूमत्वे लिङ्गान्तरमाह **अपृष्ट एवेति** । यदि प्राणादन्यो भूमा तर्हि प्राग्वत् प्रश्नेन भाव्यमित्यर्थः । भूमशब्दस्य निष्कृष्टबहुत्ववचनत्वात् किं प्राणो भूमेति भाष्ये सामानाधिकरण्याऽयोगमाशङ्क्याह **भावभाविनोरिति** । भाष्यकारेण प्राणसंनिधिरात्मप्रकरणं च संशयबीजमुक्तम् । प्रबलदुर्बलाभ्यां संशयाऽयोगादित्याशङ्क्याह **संशयस्येति** । इदं हि विशुद्धविज्ञानेन भाष्यकृतोक्तमतो यथाश्रुतानोचिभिर्नावज्ञेयम् । उपपत्तिं त्वनन्तरमेव वक्ष्याम इति भावः । पूर्वपक्षमाह **एतस्मिन्निति** । यो वै भूमेत्युक्तो भूमा न प्राणादन्यस्य अस्ति भगव आशाया भूय इति प्रश्नातिरिक्तप्रश्नाविषयत्वे सत्येतद्ग्रन्थस्थभूमरूपत्वाद् आशापेक्षप्राणभूमवदित्यनुमानं सूचितम् । अतिमात्रस्योद्देश्यत्वाऽपर्यवसानाद्विधेया विशेषणं सहामहे पर्यवसितस्य ह्युद्देश्यस्य विशेषणं वाक्यभेदावहं ग्रहस्येवैकत्वमिति शबरस्वामिन आहुः । संशयबीजोपपत्तिमनन्तरमेव वक्ष्याम इत्यवादिष्म तामिदा-

१९९ । १९ नीमाह **न चात्मन इत्यादिना** ।

निर्णीतार्थप्रतीकविषयोत्तरवशात् प्रश्नो ऽपि प्रतीकपर आत्मशब्दश्च नामादिष्वारोप्यमाणब्रह्मविषयः । प्रश्नस्यारोप्याविषयत्वे दूषणमाह **तदिति** । प्रश्नो यद्यात्मविषयः स्यात्तदोत्तरस्य प्रतीकविषयस्यात्तद्विषयत्वमपृष्टविषयत्वं स्यात्तदा च प्रश्नोत्तरयोर्वैयधिकरण्य†मित्यर्थः । प्रश्नस्येति यदि पाठो लभ्यते तदा सुगममिति । **तदेतदिति** । प्रकरणानुत्थानम् । प्रकरणमेव प्राणसंनिधिसमकक्षत्वेन संशयबीजं दर्शयता भाष्यकारेण प्रकरणत्वमस्य न निश्चितं संनिधिमात्रमात्मशब्दस्येति सूचितम् ।

---

* त्वशब्दो नास्ति २ पु. । † इतिविधेविशेषणमिति २ पु. पा. ।
‡ वैषम्यमिति १ पु. पा.

अत एव पूर्वपक्षावसरे पुनर्नोक्तमित्यर्थः । पूर्वपक्षस्तु प्राणस्यात्मशब्दाद-ध्यतिसंनिधानादुत्थित इत्युक्तमपि च भूमेति भाव इत्यत्र । **अपि तु** इत्यस्य **नामाद्यतिवादित्वाद्यवच्छिन्नत्वानि** वक्ष्यमाणेनान्वयः । फलितमाह **तदिति** । वाक्येन प्राणव्रतस्य पुनरुक्तौ प्रयोजनमाह **न नामेति*** । सत्यादिरपरम्परयेति भाष्योक्त सत्यादि दर्शयति **अत्र चेति** ।

यदवादि प्रतीकविषययोरनवगमात् प्रश्नोऽपि तद्विषय इति तत्राह **एवं चानात्मविद इति** । तत्त्वे बुद्धिनिवेशाय नामाद्युपन्यासः । उपा- २०१ । १६ स्तिस्त्वाश्रित्य विहितेत्यर्थः । योऽपि प्राणात्परं प्रश्नाभाव उक्तस्तत्राह **न च प्रश्नेनेति** । अनुमानं तु प्राणसमानाधिकृतत्वेन सोपाधिकं सर्वप्रकरणसमाप्तौ कस्यापि वचनाऽयोगाद्व्याचष्टे **प्राणेति** । ननु भूम्न आ प्रकरणसमाप्तेरनुकर्षोऽस्तु स एव प्राणः किं न स्यादत आह **संदंशेति** । पुरस्तादुपरिष्टाच्च निर्देश इह संदंशः । प्राणस्यात्मायत्ततोक्त्या सत्यशब्दश्रुत्या च तच्चायुक्तमित्युक्तम् ।

बहोर्भाव इति विग्रहे पृथ्वादिभ्य इमनिज् वेतीमनिच्प्रत्यये बहुशब्दोपरि कृते बहोर्लोपो भू च बहोरिति सूत्रेण बहोरुत्तरेषामिमनादीनामिकारस्य लोपे बहोः स्थाने भूआदेशे च भूमेति रूपम् । गार्हपत्यो ह वा एषोऽपान इत्यादिना अग्नित्वेन निरूपितत्वात् प्राणाग्नयः पुरे शरीरे । देवो मन उपाधिको जीव । अथ तदा यत्सुखं तदस्मिन् शरीरे भवति स वा एष एतस्मिन्संप्रसादे स्वप्नान्ते बुद्धान्ते इति स्वप्नजाग्रद्भ्यां सह सुषुप्तं संप्रसादशब्दपठितः । उपक्रमोपसंहारयोः शोकतमसोरभिधानाद्भूमवाद इति शङ्कायाम् उत्तरं भाष्यं तम इति शोकादिकारणमिति† ॥

## अक्षरमम्बरान्तधृतेः ॥ १० ॥

२०२ । १५

अक्षरशब्दस्य वर्णब्रह्मणो रूढिनिरूढिभ्यां संशये प्राणसार्वात्म्यान्न गौणं प्रणवसार्वात्म्यवदिति प्रत्यवस्थाननिरासात्संगतिः । पूर्वपक्षमाह **अक्षरशब्द इत्यादिना** ।

* एतत्प्रतीकस्थाने **सनत्नेति** इति दृश्यते एक पुस्तके ।

† अत्र द्वितीयं भूमाधिकरणं सम्पूर्णम् । तत्र सूत्रे — **भूमा संप्रसादादध्युपदेशात्** ८ **धर्मोपपत्तेश्च** ९ ॥

रूप्यते निरूप्यते इति रूपमभिधेयं स्वार्थे घेयप्रत्ययः । अर्थे‡ शब्दात्मकत्वानुभवो न तद्गम्यत्वकृतः । धूमगम्य§वह्नेस्तादात्म्या॥नवभासादिति । शब्दबोधे ऽभिधाय मानान्तरगम्यार्थबोधे यः शब्दबोधस्तत्रोपायत्वप्रयुक्तशङ्का ऽपि नेत्याह **अपि चेति** । **ग्रथिताः** संबद्धाः । **विद्धा** स्तादात्म्येन । **शङ्कुना** पर्णनालेन । **पर्णानि** पर्णावयवाः । **संतृणानि*** विद्धानि । **किं तु परमात्मैवेति** । धारयितुमर्हतीत्यनुषङ्गः । स्वरूपप्रमाणार्थक्रियाभिभेदमाह **तथा हीति** । ननु डित्थो ऽयमिति नामसंभेदो ऽनुभूयते तत आह **न च डित्थ इति** । यद्यर्थो न शब्दात्मा तर्हि कथमर्थप्रत्यये

२०४ । १ शब्दः प्रतिभाति न हि स तदा स्वेन परेण वोच्चार्यते ऽत आह **संज्ञा त्विति** । संस्कारोद्बोधस्य संपात उत्पादस्तेनायाता प्राप्ता गृहीतसंबन्धैः पुंभिः । **तत्संज्ञास्मरणमिति** । **अन्यहेतुकम्** अर्थात्मत्वहेतुकम् । ननु स्मर्यमाणसंज्ञायाः परोक्षत्वात्तद्विशिष्टो ऽर्थः कथं प्रत्यक्षः स्यादत आह **संज्ञा हीति** । संज्ञिनः प्रत्यक्षत्वं स्मर्यमाणा ऽपि संज्ञा न बाधते । सा हि तटस्था अर्थान्निविष्टा ऽतो नार्थस्वरूपाच्छादनक्षमेति ।

भास्करस्त्वस्थूलमित्यादेर्वर्णस्वप्राप्तनिषेधत्वानुपपत्तेरधिकरणमन्यथयामास तदनूद्य दूषयति **ये त्वित्यादिना** । अक्षरान्तधृतेः प्रधानं न निराकर्तुं शक्यं साधारणत्वादित्यर्थः ।

यत्तु कश्चिदाह भूतभविष्यदाद्याधारत्वादव्याकृतमाकाशं तथा च प्रधाननिराक्रियेति । तन्न । तथा सत्युत्तरसूत्रवैयर्थ्यात् ।

अथ स एवाह आकाशशब्दस्य रूढिभङ्गः फलं नभआश्रयस्याव्याकृतस्य प्रशास्तृत्वायोगादव्याकृताश्रयस्य तदुपपत्तेरिति । तच्च न । आत्मन आकाश इति भूताकाशाश्रयस्यात्मत्वावगमात् । अपि च प्रधानस्यापि नभआश्रयत्वसाधारण्यात्तद्व्युदासाय रूढिभङ्ग इति वाच्यम् । तच्चायुक्तम् । अभ-

११ । २१ ग्नायामपि रूढौ वाक्यशेषस्यप्रशास्तेर्निर्णयलाभादिति । **न ह्यवश्यमिति** ।

---

‡ अर्थस्येति २ पु. पा. । § धूमे गम्ये इति २ पु. पा. ।

॥ तत्तादात्म्येति १ पु. पा. ।

* सतृणानीति पाठः साधुः । आदर्शत्वेन धृतेषु सर्वेषु पुस्तकेषु उपरितनस्यैव दर्शनात्तैवोपरि निवेशितम् । मु. भा. पु. द्रष्टव्यम् पृ. २०३ टि. १ ।

प्रोक्तेव वादः । संभवति तु प्राप्तिरभिधानानुरक्ताभिधेयस्य तत्प्रकृतिकत्वे प्रकृतिविकाराऽनन्यत्वेन प्रलयावस्थवर्णेषु स्थौल्यादिप्राप्तेरिति ।

प्रपञ्चाधिष्ठानत्वमात्राभ्युपगमाद् ब्रह्मणः प्रशासनाप्रयत्नाऽयोगाद्बाव-स्थितिमते सा च प्रशासनादिति* सूत्रमसंगतमिति केचित् । तन्न । रज्ज्वां भुजगवत् प्रशासनव्यापारस्याप्यारोपात् । हन्त प्रधाने ऽपि समारोप्य तदपि प्रशासितृ किं न स्यादिति चेत् । नैतत् । चेतने दृष्टस्य नियन्तृत्वस्य जगदैश्वर्यरूपेण चेतनएव समारोपसंभवात् । न हि गजतुरगपतिपरिवृते राजामात्ये राजत्वमारोपितमिति कुड्यादावारोप्यते । आरोपितमपि नियन्तृत्वं ब्रह्मणि मुख्यमेव प्रपञ्चस्थित्यर्थक्रियाकारित्वादक्षारगतरूप्यादिवत् । प्रधाने तु गौणम् । तदिदमाह न च मुख्यार्थसंभवे इति ॥

## ईक्षतिकर्मव्यपदेशात्सः ॥ १३ ॥ २०५ । १८

अम्बरावधिकाधारा†त्प्रणवः पर्युदासि यः‡ ।
तद्ध्येयमपरं किं वा परमित्यत्र चिन्त्यते ॥

पूर्वां बुद्धिसन्निधिसंगतिः । कार्येति । कार्यब्रह्म हिरण्यगर्भः तत्र जनो जीवो यस्मिन् स ब्रह्मलोकस्तत्प्राप्तिः फलं यस्य ध्यानस्य ततथा तस्य भावस्तत्त्वं ततो हेतोरपरं ब्रह्म ध्येयमिति गम्यते । ननु परं पुरुषमभिध्यायीत परात् परं पुरुषमीक्षत इतीक्षणध्यानयोरेकविषयत्वा-वगमादीक्षणस्य च यथार्थत्वात् परमार्थं ब्रह्मैव ध्येयं न त्वपरमित्यत आह अर्थभेदत इति । ध्यानस्य परविषयत्वादीक्षणस्य परात्परो यस्तद्विषयत्वादेकविषयत्वमसिद्धमित्यर्थः । प्रथमहेतुं व्याचष्टे ब्रह्म वदति । २०६ । १ अर्थभेदत इत्येतच्छङ्कोत्तरत्वेन व्याचष्टे न चेति । अङ्गीकृत्य दर्शनस्य तत्त्वविषयत्वमीक्षणध्यानयोर्विषयभेद उक्तस्तदेवासिद्धमित्याह न चेति । ननु युक्त्या पर्यालोचनमिहेक्षणं तच्च तत्त्वविषयमित्याशङ्क्याह न च मनमिति । किं मननदर्शनयोरैक्यमुताव मननविवक्षा । नाद्य इत्याह

* व्या॰ सू॰ अ॰ १ पा॰ ३ सू॰ ११ । तृतीयाधिकरणान्तर्गतमिदं सूत्रम् ।

† अत्र तृतीयम् अक्षराधिकरणं सपूर्णम् । तत्र सूत्राणि ३ अक्षरमम्बरान्तधृतेः १० सा च प्रशासनात् ११ अन्यभावव्यावृत्तेश्च १२ ॥

‡ आधार इति ३ पु॰ पा॰ । § पर्युदासित इति ४ पु॰ पा॰ ।

२०६ । १० **मननादिति** । न द्वितीय इत्याह **न चेति** । ईक्षणध्यानयोरर्थभेदं निराकरोति **ईक्षणेनेति** । एको ऽर्थ इत्यन्वयः । यद्वादि न सर्वं दर्शनं तत्त्वविषयमिति तत्राह **औत्सर्गिकमिति** । ईक्षतेरीक्षणस्य तत्त्वविषयत्वमौत्सर्गिकं न चेहापवादः कश्चित् तथा ध्यानस्यापि तत्कारणस्य स्या*-दन्यथा ऽन्यद् ध्यायत्यन्यत्पश्यतीति हेतुहेतुमत्त्वासिद्धेरित्यर्थः । प्रकारान्तरेणार्थभेदं निराकरोति **अपि चेति** । **समभिव्याहारादिति** । स ईक्षत इति प्रकृतापेक्षनिर्देशादित्यर्थः । **तदनुरोधेनेति** । प्रमाणद्वयानुरोधेनेत्यर्थः ।

हे सत्यकाम परं निर्विशेषम् अपरं हिरण्यगर्भाख्यं च यद् ब्रह्म तदेतदेव । एतच्छब्दार्थमाह यदोङ्कारः स हि तस्य प्रतीकः प्रतिमेव विष्णोः तस्मात्प्रणवं ब्रह्मात्मना विद्वानेतेनोङ्कारध्यानेनायतनेन प्राप्तिसाधनेन परापरयोरेकतरं यथोपासनमनुगच्छतीति प्रकृत्यैकमात्रद्विमात्रोपास्ती उक्त्वा वक्ति पिप्पलादः यः पुनरोमित्येतदक्षरं त्रिमात्रमिति । तृतीया द्वितीयात्वेन परिणेया ब्रह्मोङ्कारभेदोपक्रमात् । तथाविधमक्षरं सूर्यप्रतिमं† परं पुरुषमभिध्यायीत स सूर्ये प्राप्तः सामभिर्ब्रह्मलोकं प्राप्यते‡ ॥

२०७ । १४ **दहर उत्तरेभ्यः ॥ १४ ॥**

प्रागुदाहृतपरमपुरुष§शब्दस्य दहरवाक्यशेषगतेनपुरुषशब्दवद्ब्रह्मविषयत्वशङ्कायामस्यापि ब्रह्मविषयत्वोपपादनात्संगतिः ।

**पूर्वेभ्य इति** । श्रवणमनननिदिध्यासनेभ्य‖ इत्यर्थः । **आधेयत्वादिति** । ब्रह्मपुरशब्दोक्तं देहलक्षणं पुरं जीवस्य युज्यते । तस्य परिच्छिन्नत्वेनाधेयत्वात् स्वकर्मोपार्जितशरीरेण सम्बन्धविशेषाच्च ब्रह्मणः पुरम्¶-मिति षष्ठीसमाससंभवात् । ब्रह्मणस्तु न युक्तं पुरम् उक्तहेतुद्वयाभावादित्यर्थः । विशेषादित्येतद्व्याख्याति **असाधारणेनेत्यादिना** । जीवभेदो

२०८ । १९ जीवविशेषः । आधेयत्वहेतुं व्याचष्टे **अपि चेत्यादिना** । तेनाधिकरणेन

* तत्कारणस्य तत्त्वविषयत्व स्यादिति २ पु· पा· । † सूर्यान्तरस्थमिति २-५ पु· पा· ।
‡ प्रतिपद्यत इति ३ पु· पा । अत्र चतुर्थेन ईक्षतिकर्माधिकरणं सम्पूर्णम् । तत्र सूत्रम् १-
**ईक्षतिकर्मव्यपदेशात्सः ॥ १३ ॥** § परपुरुषेति २-३ पु· पा ।
‖ ध्यानेभ्य इति १-२ पु· पा· । ¶ ब्रह्म पुरमिति २ पु· पा·

गुहानेन* ब्रह्मशब्दार्थेनाधेयेन संबन्धव्यम्। समासाभिहितसंबन्धसामा-न्यस्याधाराधेयभावएव विश्रमादित्यर्थः। भक्तिर्गुणस्तेन हि शब्दो मुख्या-र्थाद्वृज्यते। यदि चेतनत्वं समं जीवब्रह्मणोस्तर्हि को विशेषस्तत्राह उपधानेति। भक्त्या च तस्य ब्रह्मशब्दवाच्यत्वमिति भाष्ये वाच्यत्वं तात्पर्यगम्यत्वं भाक्तत्वे सत्यभिधेयत्वविरोधादित्यर्थः। अन्यस्य ब्रह्मण इत्यर्थः। अनिर्दिष्टाधेयमिति। वेश्माधेयतया निर्दिष्टस्याप्याकाशस्य संदिग्धत्वादनिश्चय इत्यर्थः। उपमानोक्तेरन्यथासिद्धिमाशङ्क्याह नेनेति। २०९। १९ ह्यस्तनाद्यतनत्वादिना युद्धे भेदारोपः क्रियते।

गगनं गगनाकारं सागरः सागरोपमः।
रामरावणयोर्युद्धं रामरावणयोरिव ॥ इत्यत्र।

अस्तु वोपाध्यपेक्षया ऽऽकाशे भेदारोपस्तथापि न बाह्याकाशतु-ल्यत्वं हार्दाकाशस्येत्याह न चेति। यद्यल्पत्वाद्धार्दनभसो न बाह्येनो-पमेयता हन्ताधिकत्वाद् ब्रह्मणोऽपि न स्यादत आह न भूताकाशेति। आधेयत्वादित्येतत्प्रत्याह उपलब्धेरिति। विशेषाच्चेत्येतद्विवृणोति सेनेति। मुख्याधेयत्वत्यागे हेतुमाह तथा चेति। तन्निर्णीताधेयं वेश्म संनिहितपुरस्वामिना संबध्यत इत्युक्तत्वात्कथं जीवपुरे ब्रह्मपदन-लाभो ऽत आह उत्तरेभ्य इति। संनिधिर्लिङ्गैर्बाध्यत इत्यर्थः। ननु लिङ्गानि ब्रह्माभेदपराणि नेत्याह ब्रह्मणो हीति। इह ब्रह्मणि बाधकं जीवे च साधकं प्रमाणं नास्ति ब्रह्मबाधकत्वेन जीवसाधकत्वेन चैतस्य संनिधेर्लिङ्गैर्बाधादित्यर्थः। अपि चासिद्धो जीवसंनिधिः पुरस्य ब्रह्मसंबन्धो-पपादनाद् ब्रह्मशब्देन जीवाऽनभिधानादित्याह ब्रह्मपुरव्यपदेशश्चेति। अथ य इहात्मानमिति भाष्यस्य श्रुतावनुशब्दार्थमाह अवगत्येति। विदर्थ-माह अनुभूयेति। साक्षात्कृत्येत्यर्थः। काम्यन्त इति कामा विषयाः। चार उपलब्धिः। आद्यसंशयस्य पूर्वपक्षमनूद्य सिद्धान्तयति स्यादेतदित्यादिना।

भाष्ये द्यावापृथिव्याद्यन्तर्व्याप्तिनिरूपणादनर्थकमिति शङ्कते स्यादे-तदिति। तर्ह्यथ§ य इहात्मानमित्यात्मशब्दः कथमत आह नाभ्या- २१२। २

* अनेनेति नास्ति। ३ पु०।
† भाष्य इति १ पु० पा०।
‡ अन्तर्व्याप्त्यापादनमिष्टापत्तिरिति २ पु० पा०।
§ अथशब्दो नास्ति २ पु।

मिति । तथा च *भूताकाशस्य दहरत्वसिद्धिरित्यर्थः । अस्मिन्कामा इत्यस्मिन्शब्देन द्यावापृथिव्याधार आकाश एव परामृश्यते समानाधारत्वप्रत्यभिज्ञानाद् न द्यावापृथिव्यौ तथा चैष इत्यात्मेति तदुपरितनशब्दाभ्यामप्याकाश एव निर्दिष्ट इत्याह अनेन हीति । आकृष्येति भाष्ये

२१२ । ८ व्यवधानं सूचितम् । व्यवहितस्य ह्याकर्षणं तत्कथयति द्यावापृथिव्यादीति । उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते इति पूर्ववाक्ये आकाशनिर्देशानन्तरं द्यावापृथिव्यादिनिर्देशाद् व्यवधानम् । एताश्च सत्यान्कामान् इत्यात्मशब्दानन्तरं कामनिर्देशात्सर्वेषु लोकेषु कामचारो भवतीति फलश्रवणं गुणविज्ञानस्यैवेति शङ्कते नन्विति । चकाराद्गुणगुणिनोर्ज्ञेयत्वे समुच्चयावगमात्समुच्चितोपास्तिफलं कामचार इति परिहारार्थः ।

पूर्ववाक्यव्यवहितद्यावापृथिव्याद्यपेक्ष्या†स्मिन्शब्देन प्रत्यभिज्ञानादाकाशमेव परामृश्यतइत्युक्तं तत्रैव हेत्वन्तरमाह अस्मिन्कामा इति चेति । लक्षितात्मन एकत्वे ऽपि पूर्वं शब्दतो ऽनुपात्ते नैकवचनपरामृश्यतेत्यर्थः । यदि दहराकाशस्य विज्ञेयत्वं कथं तर्हि तदाधेयस्य विज्ञेयत्वोपदेशो ऽत आह तदनेनेति । एतमेव दहराकाशं प्रक्रम्य श्रुतिः प्रवृत्तइत्यन्वयः । धनार्यद्भिः धनेच्छावद्भिः । यद्यपि सुषुप्तौ‡ ब्रह्मप्राप्तिर्न लोकसिद्धा तथापि वेदसंस्कृतजनप्रसिद्ध्या वेदस्य तत्र तात्पर्यं गम्यतइत्याह तथापीति । कर्मधारयस्य§ षष्ठीसमासाद्दुर्लभत्वाल्लिङ्गोपन्यासवैयर्थ्यमाशङ्क्या-

२१३ । २० भ्युच्चयार्थत्वेन परिहरति अत्र तावदित्यादिना ।

षष्ठं स्थितम्—स्थपतिर्निषादः शब्दसामर्थ्यात्‖ । रौद्रीमिष्टिं विधायाम्नायते एतया निषादस्थपतिं याजयेदिति । तत्र निषादस्थपतिस्त्रैवर्णिकानामन्यतम उतान्य इति संदेहे ऽग्निविद्यावत्त्वेन समर्थत्वादनिषादे ऽपि निषादानां स्थपतिः स्वामीति शब्दप्रवृत्तिसंभवादन्यतम इति प्राप्ते ऽभिधीयते । निषाद एव स्थपतिः स्यात्कर्मधारयश्च समासो निषादशब्दस्य श्रौतार्थलाभेन शब्दसामर्थ्यात् षष्ठीसमासे तु संबन्धो लक्ष्येत षष्ठ्यश्रवणात् समासस्थषष्ठीलोपो ऽपि शब्दाभावत्वान्नैव षष्ठ्यर्थबोधी द्वितीयायाश्च

* तथा चेति नास्ति ३ पु. ।
† पृथिव्याद्यपेक्ष्येति ३ पु. पा. ।
‡ सुषुप्ताविति १-२ पु. पा. ।
§ कर्मधारयस्येति २-३ पु. पा. ।
‖ जै. सू. अ. ६ पा. १ सू. ५१ निषादः स्यादिति क्वचित् पाठः ।

प्रत्येकं निषादस्थपतिशब्दाभ्यां संबन्धसंभवे सति नाश्रुतषष्ठी कल्प्या । तस्मान्निषाद एव स्थपतिरिति ।

तदप्याधिक्यमुक्तं सूत्रकारेण चकारं प्रयुञ्जानेनेत्यर्थः । सूत्रार्थमाह **तथा हीत्यादिना** । विपक्षाङ्गीकृतौ हेतुमाह **असंभवादिति** । सेतुर्विधृतिरिति श्रुतौ धृतिशब्द आत्मशब्दसामानाधिकरण्याद्यद्यपि कर्तृवाची क्तिजन्तस्तथापि सूत्रगतधृतिशब्दो महिमशब्दसामानाधिकरण्यात् क्तिन्नन्तत्वेन भाववचन इत्याह **सोऽत्र इति** । प्रसिद्धिशब्दस्य रूढिवाचित्वभ्रमम- २१४ । १२ मपनयति **न चेति** । रथाङ्गमिति नाम चक्रवाके लक्षणया संप्रत्येव प्रयुज्यते । रथाङ्गशब्दपर्यायस्य चक्रप्रातिपदिकस्य चक्रवाकशब्दावयवत्वेन निवेशात् । आकाशशब्दस्य तु ब्रह्मण्यनादिकाले बहुकृत्वः प्रयोगान्निरूढलक्षणेत्यर्थः ।

पञ्चपाद्यां तु रूढिरुक्ता तां दूषयति ये **त्विति** । नभसि ब्रह्मणि च रूढ्यभ्युपगमेऽनेकार्थत्वं नाभसगुणयोगाद् ब्रह्मणि वृत्तिसंभवे च शक्तिकल्पनायां गौरवमित्यर्थः । अथ केचिदा समन्तात्काशत इति आकाशशब्दस्यावयववृत्तिसंभवे सेतुशब्दस्येव तद्बुद्धिभिन्नगुणवृत्तिरयुक्तेत्याहुः । तन्न । अपहृत्य योगं रूढ्यर्थे प्रत्यायिते रूढिं पुरस्कृत्य क्रूरादिव गुणयोगादन्यत्र वृत्तिलाभेऽनपेक्ष्य रूढिमवयवव्युत्पत्तिक्लेशस्याऽयुक्तत्वात् । सेतुशब्दोऽपि सेतुगुणाद्विधरणादेर्ब्रह्मणि वर्तते । भाष्यकृद्भिस्तु सेतुशब्दव्युत्पत्तिरभ्युच्चयार्थमाश्रिता* । अस्तु तर्ह्यनेकार्थत्वपरिहाराय ब्रह्मण्येव मुख्यत्वमत आह **न चेति** । **तेनैव** विभुत्वादिगुणयोगेन **वर्त्स्यति** वृत्तो भविष्यत्याकाशशब्द इति न वाच्यम् । तत्र हेतुर्वैदिकपदार्थप्रत्ययस्य लोकपूर्वकत्वाद्भूते रूढ्य प्रतीतेरिति । एतत्सिद्ध्यर्थमाह **लोकाधीनेति स्यान्तेन** । रूढिवादी २१५ । २ तु प्रसिद्धगुणवृत्तिवैषम्यं शङ्कते **नन्विति** । **व्यतिरेकेण निर्देशादिति** । अन्तर्हृदय आकाश इति ब्रह्मण्याकाशशब्दप्रयोगादेवाकाशगुणयोगस्य लक्ष्यस्य सिद्धौ लभ्यायामपि तद्व्यतिरेकेण यावानयमाकाशस्तावानित्याकाशसादृश्यस्य निर्देशाल्लक्षणा न युक्तेत्यर्थः । यत्र लक्षणया शब्दः प्रयुज्यते तत्र लक्ष्यांशस्य पृथग् न निर्देश इत्यत्र दृष्टान्तमाह **न हि**

---

* अङ्गीकृतेति २ पु॰ पा॰ ।

**भवतीति** । गङ्गापदेन गङ्गायाः कूलमित्यर्थे विवक्षिते गङ्गापदमेव प्रयु-
ज्यते न तु गङ्गाया इति लक्ष्यसंबन्धं पृथगुक्त्वा गङ्गेति प्रयुज्यत इत्यर्थः ।
२१५ । ६ परिहरति **तत्किमिति** । आग्नेयादौ पौर्णमास्यमावास्याशब्दप्रयोगादेव
लक्ष्यस्य कालसंबन्धस्य सिद्धावपि तद्व्यतिरेकेण पौर्णमास्याममावास्यायामिति
च कालसंबन्धनिर्देशादुक्तन्यायो ऽनेकान्त इत्यर्थः । दृष्टान्तासिद्धिमाशङ्क्याह
**न चेति** । मुख्यत्वे ह्यमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्तीत्यत्रापि
अमावास्याशब्दस्य कर्मणि रूढिः स्यात्तथा च पितृयज्ञः स्वकालत्वादनङ्गं
स्या*दित्यधिकरणबाध इति । अपरं रूढिकारणमाशङ्कते **यच्चेति** ।
अन्यत्र मुख्यत्वेन निश्चितस्य शब्दस्यान्यत्रार्थे प्रयोगे ऽर्थश्चेदन्यतो ऽधि-
गतः तर्हि मुख्यत्वं न चेदमुख्यत्वं गङ्गायां घोष इत्यत्र हि गङ्गापदादेव
गङ्गासंबन्धितीरमनुपपत्त्या श्रोता जानाति ततस्तत्र लक्षणा । आकाश-
शब्दस्तु यदेष आकाश आनन्दो न स्यादित्यत्र सत्यं ज्ञानमनन्तमिति वाक्य-
निश्चिते ब्रह्मणि प्रयुक्त इति वाचकस्तथा च दहरवाक्ये ऽपि ब्रह्मवाचक
,, । ११ इत्यर्थः । शब्दादनधिगतार्थप्रतीतौ लक्षणेत्येतद्व्यभिचारयति **सोमेनेति** ।
सोमशब्दो हि लताचन्द्रमसोर्मुख्य† तद्वाक्यार्थान्वयित्वेन सोमपदादन्यतो
ऽनधिगतायां लतायामत्र वाक्ये प्रयुक्त इत्यर्थः । अन्यतो निश्चिते शब्दस्य
मुख्यत्वमित्येतदनेकान्तयति **न चेति** । अत्र हि समुदायानुवादिवाक्य-
द्वये पौर्णमास्यमावास्याशब्दौ लाक्षणिकौ न भवतो यागषट्कस्य प्रकृतादाग्ने-
यादिवाक्याद् ज्ञात इति ज्ञातार्थविषयत्वं मुख्यत्वे ऽनेकान्तमित्यर्थः ।

**वरिवसितुं** शुश्रूषितुम् । **अपनिनीषुः** अपनेतुमिच्छुः प्रजापतिरुवाचेत्य-
न्वयः । यथा प्राक्प्रतिबिम्बस्यात्मत्वेन दृष्टनखलोम्नां छेदनादूर्ध्वमभावादनात्म-
२१७ । १४ त्वमेवं सर्वस्य प्रतिबिम्बस्य विवक्षितम् । **साधु** अलंकारादुपन्यासेन **एष
आत्मेति** । देहाद्यागमापायसाक्षीत्यर्थः । **देहानुपातित्वाच्छायाया
इति** । यथा खलु नीलाऽनीलपटयोरादर्शे दृश्यमानयोर्यन्नील तन्महार्हं-
मित्युक्ते न च्छायाया महार्हत्वमेवं छायाकारदेहस्यैवात्मत्वमिति विरो-
चनो मेने । इन्द्रस्त्वल्पपापत्वा‡च्छुद्धधीनतया न प्रतिबिम्बमेवात्मेति

* अ॰ सू॰ अ॰ ४ पा॰ ४ सू॰ १९ । † मुख्य एवेति ३ पु॰ पा॰ ।
‡ अल्पपापत्वादिति ३ पु॰ पा॰ ।

धारणार्थत्वं जानन्नेव बिन्दुरध्याहृतः । अविनाशित्वादिति हेतोः साध्या-
विशेषमाशङ्क्याह अनेनेति । असिद्धस्यापि हेतोः सिद्धिनिर्देशेन सिद्धिहेतु-
भूतं प्रमाणं सूचितमित्यर्थः । तदेव प्रमाणं दर्शयति य एवाहमिति ।

२२३ । १९ आचार्यदेशीया आचार्यकल्पाः । न तु सम्यगाचार्यास्तन्मतमित्यर्थः ।
एकदेशिप्रत्यवस्थानं जीवो दहर इति पूर्वपक्षे ऽन्तर्भावयति यदीति । उक्तं
हि पूर्वपक्षिणा छायावद्वा[1] आरोपेण स्वत एव वा देहादिवियोगमपेक्ष्यामृ-
तामयत्वादि जीवस्यैवेति एतं त्वेव तदत्यक्षिस्थपुरुषानुकर्षणमङ्गीकृत्य
इदानीं तु परामर्शस्यान्यविषयत्वेन स एवैकदेशी भूत्वा प्रत्यवतिष्ठत इत्यर्थः ।
नन्वेवं परमात्मा चेदिह निर्दिष्टः स एवेह दहरः किं न स्यात् । अस्तु ।
जीवो ऽपि किं न भवेत् । अत एव अविनिगमेन पूर्वपक्ष इत्यतीतानन्तरसू-
त्रोपक्रमे वर्णितं तदिहापि सूत्रे ऽनुसंधेयम् ।

नन्वेतं[2] व्याख्यास्यामीति परमात्मानं[3] प्रतिज्ञाय कथं स्वप्नसुषुप्तिप-
र्यायस्थो जीवो व्याख्यायते । उच्यते ।

सूत्रे चतुर्थपर्याये वक्ष्यमाणे परात्मनि ।
धीनिवेशाय जीवस्याप्युपास्तिरिह वर्ण्यते ॥

अत एव व्याख्यास्यामीति भविष्यत्प्रयोगः । ननु परमात्मपरा-
मर्शे जीवः परामृष्ट एव तन्निरासेन आह न खल्वियति । दृष्टे संभवत्य-
दृष्टकल्पनानुपपत्तेर्जीवानुवादेन ब्रह्मना बोध्यते नोपास्तिविधिः । इन्द्रब्रह्म-
चर्यावसानानन्तर्ये[4]ऽपि भविष्योक्तिरिति परिहरणीयः । अस्य चौपाधिको
जीवो ऽर्थान्तरे च नापहतपाप्मत्वादिसंभव इति मतम् ।

२२४ । २ पारमार्थिकजीवब्रह्माविभागमतमाह मतान्तरमिति । शारीरका-
र्थमाह तथा हीति । सूत्रकारः परिहरति न च वस्तुत इति । औपा-
धिकभेदेन गुणसंकर इत्यर्थः । कर्मविषयभेदं व्याचष्टे अविद्याकल्पित-
मिति । अविद्याकल्पित कर्तृत्वाद्याश्रयस्य कर्मविषयः प्रवृत्ता इत्यत्र हेतु-

[1] छायात्मवदिति २ पु. पा. । [2] एतमिति १ पु. पा. ।
[3] परमात्मव्याख्यानमिति २-३ पु. पा. । [4] ब्रह्मचर्यावसानान्तर्येति २ पु. पा. ।
[5] मत्प्रमाणमिति २ पु. ।

माह **अविद्यावदिति ।** इत्युक्तमध्यासभाष्ये । अविनिगमपरिहारार्थं जीव परामर्शस्यान्यथासिद्धिप्रतिपादकं सूत्रमवतार्य व्याचष्टे **नन्वित्यादिना ।** २२३ । १८

**स वा अयमिति ।** स वै ईश्वरस्तत्त्वतोऽयं जीव एव औपाधिकस्तु भेद इत्याह पुरुष इति । पुरुषशब्दार्थमाह पुरिशय इति । पूः उपाधिः । किमेकस्यामेव पुरि शेते न अपि तु सर्वासु पूर्षु । तमाचार्य शिष्याश्चेद् ब्रूयुः । तद्यत्रैतेति । त*त्र अवस्थात्रयप्रापककर्मोपरमे सति यत्र यस्मिन्काले एत-दिति क्रियाविशेषणम् । एतत्स्वपनम् । सुप्तः स्वापस्य द्विप्रकारत्वात् । स्वप्न-व्यावृत्त्यर्थमाह **समस्त** इति । उपसंहृतसर्वकरण इत्यर्थः । अत एव विप-र्यासपर्कात् सम्प्रसन्नः । स्वप्ने महीयमानः पूज्यमानः चरति पश्यति भोगान् ॥

## अनुकृतेस्तस्य च ॥ २२ ॥ २२५ । ५

सप्तम्याः सति विषये च साधारण्यात्संशयः । पूर्वमेव त्येत तद्-त्येतच्छब्दस्य प्रकृतार्थत्वाद् दहरस्य जीवता निरासि तद्वदत्राप्यु तत्र-त्यादौ सर्वनाम्नः प्रकृतार्थत्वाऽनियमादिति शङ्कानिराकरणात्सङ्गतिः । तत्र त-द्विषयसप्तमीस्वीकारे तद्भासयतीति णिजध्याहारप्रसङ्गात्सतिसप्तमीमादाय पूर्व-पक्षमाह **अभानमिति ।** तस्मात्तेजःप्रत्यभिभावकत्वात्तदनुभानत्त्वेन ता-णानुकाराच्च तत्रशब्देन तेजोरूप पदार्थान्तरं गम्यतइति द्वितीयाद्वन्यायं । प्रथमार्द्धं व्याचष्टे **चन्द्रेति ।** विमत तेजः तदभिभावकत्वात् सूर्य-दित्यनुमानमसूचि । तस्यानैकान्तिकत्वमाशङ्क्याह **ग** [illegible]**ति ।** भास-कत्वे सति तेजोऽभिभावकत्वं हेतुरित्यर्थः । नान्योन्याश्रयस्य तेजसः कथं तेजःप्रकाशकत्वमत आह **अयन्तं चेति ।** अस्य तेजसोऽयं विशेष ,, । ११ श्रुतित आश्रित इत्यर्थः । अभिभवानुकारयोस्तेजसि वस्तु श्रुतिवशाद्ध-श्रयणे तु गौरवमिति पूर्ववाद्याशयः । ननु तस्य भासेति सर्वज्ञत्वे वस्त-

* तदिति नास्ति ३ पु. ।

† अत्र पञ्चमं दहराधिकरणं समाप्तम् । तत्र सूत्राणि ८—दहर उत्तरेभ्यः १४ गति-शब्दाभ्यां तथा हि दृष्टं लिङ्गं च १५ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः १६ प्रसिद्धेश्च १७ इतरपरामर्शात् स इति चेन्नासम्भवात् १८ उत्तराच्चेदाविर्भूतस्वरूप-स्तु १९ अन्यार्थश्च परामर्शः २० अल्पश्रुतेरिति चेत्तदुक्तम् २१ ॥ [illegible] सायां तु १८ सू. पर्यन्तं पञ्चमं दहराधिकरणम् [illegible] [illegible] [illegible] विभागो दृश्यते ।

२२५ । १२ लिङ्गे कथं तेजःशङ्का ऽत आह सर्वशब्द इति । द्वितीयार्धं व्याख्याति न चेति । ननु मन्त्रस्थतच्छब्दैः प्रकृतं ब्रह्म परामृश्यते ऽत आह तत्रेति । उपरिष्टात्प्रदर्शनार्थं वक्ष्यमाणमेव अवमृक्ष्यन्ति* तस्य परामर्शं करिष्यन्ति । रागवाचिनः शब्दात्तेनेति तृतीयासमर्थाद्रक्तम् इत्यर्थे ऽणप्रत्ययो भवति । यथा काषायः पट इति । तस्येति षष्ठीसमर्थादपत्ये ऽणप्रत्ययो भवति यथौपगव इति । अनयोः सूत्रयोस्तच्छब्दौ न प्रकृतार्थौ तददर्शनात् । ब्रह्मण्येवेति । यदनुभानं मन्त्रे तद् ब्रह्मण्येव लिङ्गम् । तस्य भारूप इत्यादिश्रुतौ चैतन्यप्रकाशत्वसिद्धेस्तदध्यस्तसूर्यादेस्तदनुभानसम्भवात् । न तेजस्यवभूते तस्यालौकिकत्वादनिश्चितत्वाच्च वेदे । अपि च तेजःपक्षे उपास्तिकल्पनाददृष्टार्थं वाक्यं स्याद् ब्रह्मपक्षे तु प्रस्तुतस्य ज्योतिषः समर्पणाद्दृष्टार्थत्वमित्याह तस्मादिति । विरोधमाहेति । अनपेक्षा द्वारकं भास्यभासकत्वविरोधमाहेत्यर्थः । किं भाते ऽनपेक्षा तेजसः उत भासकत्वे इति विकल्प्य क्रमेण दूषयित्वा समाधत्ते न हीति । भासमानतेजसा न तेजो भातीति नियमाद्विरोध इत्यर्थः । आदित्यादेर्ब्रह्मानुकाराभावः किं स्वतो विसदृशत्वादुत तदीयक्रियया समानक्रियाऽनाश्रयत्वात् । आद्यमनूद्य

२२६ । २० प्रत्याह यदीति । धूलिपवनयोरयोदहनयोश्च व्यभिचार इत्यर्थः । द्वितीयमनूद्य दूषयति अथेति । ब्रह्मणः सूर्यादेश्च क्रियासाम्याभावो हेतुना साध्यः तत्र यदि स्वरूपसाम्याभावो हेतुत्वेनोच्येत तदा यत्र स्वरूपसाम्याभावस्तत्र क्रियासाम्याभावो ऽसिद्ध इत्यर्थः । नन्वयसि न दहनक्रिया कथं वह्नितुल्यक्रियत्वमत आह वह्नेरिति । एकैव दहनक्रिया वह्नौ स्वतःसैव तत्सम्बन्धादयसि समारोपिता ऽतः क्रियासाम्यमित्यर्थः । ज्योतिषां ज्योतिरिति भाष्योदाहृतश्रुतिं व्याचष्टे ज्योतिषामिति । तेजोन्तरेण तु सूर्यादितेजो विभातीत्यप्रसिद्धमिति भाष्ये इन्द्रियत्वमनापन्नेनेति विशेषणीयम् इन्द्रियेण सूर्यादिभानादित्याह । अनिन्द्रियभावमिति । अथ वा

२२७ । ८ न सूर्यादीनामिति भाष्यं व्याचष्टे सर्वशब्दस्य हीति । अलौकिके तेजोधातौ

* परामक्ष्यन्तीति २ पु. पा. ।
कल्पापेक्षेति २ पु. पा. ।
यत्र यत्रेति २ पु. पा. ।
नेति नास्ति २ पु. ।
ज्योतिषामित्यधिकमेतदग्रे २-३ ।
अनयोरिति नास्ति १ पु. ।
तत्र तत्रेति २ पु. पा. ।
इत्य भवेन्नाहेति २ पु. पा. ।

स्वीकृते सति भास्यवाचिसर्वशब्दस्य वृत्तौ रूपरूपिरूपैकार्थसमवायिषु संकुचेदलौकिकतेजसो रूपादिषु मध्ये रूपमात्रप्रकाशकत्वादित्यर्थः । तेन २२७ । ५८
रक्तमिति । प्रकृतेः परो यः प्रत्ययस्तस्मिन्योऽर्थविशेषस्तस्मिन्नन्वाख्यायमाने प्रत्ययार्थस्तेनप्रकृत्यर्थस्यास्ति प्रस्तुतत्वमित्यर्थः । एवमनुकारलिङ्गब्रह्मणि सम-र्थ्यमानप्रतिषेधं समर्थयते न तत्रेति । णिजध्याहारप्रसङ्गं परिहरति तेनेति । तत्रेति । विषये निर्दिष्टे सूर्यादेर्भानं प्रकाशकतयैव प्राप्नोति ततः प्रकाशकतयेति नाध्याहाराभिप्रायमपि तु व्याख्या । अगृह्य इति प्रतिज्ञाय न हि गृह्यतइति हिशब्देनाग्राह्यत्वहेतुसाधकं दूरूपत्वं श्रुत्या सूचितम् ।

न तत्रेति । न तस्मिन् ब्रह्मणि भास्ये सूर्यादयो भासकत्वेन न भान्ति । कुतोऽयमस्मद्गोचरोऽग्निर्भाति किं बहुना सर्वं जगत्तमेव परमेश्वरस्वतो भान्तमनुभाति । किं ब्रह्मभानादन्यज्जडभानं* यथा दीपप्रकाशाद-न्यद् घटज्ञानं नेत्याह तस्य भासेति । यथाऽग्निसम्बन्धादयो दहती-त्युच्यते एवमधिष्ठानब्रह्मभासैव जगद्विभाति नान्यज्जगद्भानमित्यर्थः[†] ।

## शब्दादेव प्रमितः ॥ २४ ॥　　२२८ । १

अत्र जीवपरयोः समानधर्मादर्शनेऽपि श्रुत्योर्विप्रतिपत्तेः संशय-बीजमित्याह नाङ्गुष्ठेति । परिमाणविशेषवत्त्वमात्रवाच्यङ्गुष्ठमात्रशब्दः तद्वि-शेषे श्रुतिरेव । यद्यत्र परमात्मा प्रतिपाद्यस्तर्हि परिमाणविशेषो न मुख्यः स्याज्जीवपक्षे ईशानश्रुतिर्न मुख्याऽत एकत्र गौणता सा च क्वेत्यज्ञाना-त्संशय इत्यर्थः । प्राक् सति विषये च साधारणमधर्मो न तद्विषयतद्विति विषयत्वनिषेधकस्मृत्या विषये व्यवस्थापिता तद्वत्परिमाणमपि जैवमैश्वरं वेति संशयेऽङ्गुष्ठमात्रं निश्चकर्पेति निर्णीतार्थस्मृत्या जैवमिति प्रत्यवस्थाना-त्संगतिः । पूर्वपक्षमाह प्रथमेति । दहरविचारेणापुनरुक्तिमाह अपि २२८ । ५८
चेति । शङ्कानिरासः समुच्चयार्थः । परमात्मनोऽल्पत्वं हृत्पुण्डरीक-स्थानत्वं[‡] कारणं युक्तं स्थानविशेषस्य दहरं पुण्डरीकं वेश्मेति निर्दे-शादिति योजना । उपाधिं संकीर्त्यान्यत्वोक्तेरौपाधिकं तत्स्थत्वमल्पत्वमनन्त

* जगद्भानमिति ३ पु पा ।

† अत्र षष्ठम् सप्तमं वा अनुकृत्यधिकरणं पूर्णम् । तत्र सूत्रे २—अनुकृतेस्तस्य च २२ अपि च स्मर्यते २३ ॥

‡ पुण्डरीकायस्थानमिति ३ पु पा ।

पर इति सिध्यन्त्वि*त्यर्थः । स्वो यो भवति स स्वभविता† तदनिर्णया-त्स्वभावाऽनिर्णयः । जीवपरयोर्निरंशत्वान्मध्याभावः । पूर्वपक्षे तु मध्ये उदामाने स्वरूपइति मध्यात्मशब्दौ नेयौ । समुष्टिः सकनिष्ठिकः करो

२२९ । १९ ऽरत्निः । **एतद्वै तदिति** । येयं प्रेतइति जीवस्यापि प्रकृतत्वात्तच्छब्दोपपत्ति-रपि द्रष्टव्या । यद्वाद्यङ्गुष्ठवाक्ये जीवोपक्रमादस्य तत्परत्वमिति । तन्न । ततो ऽपि प्राक् परस्य प्रस्तुतत्वात्तत्सापेक्षत्वाच्चास्य वाक्यस्येत्याह **प्रश्नेति** । अङ्गुष्ठवाक्यस्यान्यत्र धर्मादिति प्रस्तुतपरमात्मप्रश्नोत्तरत्वात्प्राथम्यमसिद्धमि-त्यर्थः । ब्रह्मणः‡ कथं तर्हि परिमाणनिर्देशो ऽत आह **जीवस्येति** । उप-हितपरिमितजीवानुवादेन विरुद्धांशमपहाय तस्येश्वरैक्यपरं वाक्यमित्यर्थः ।

ब्रह्मणः परिमाणोपपादनमफलमुपाधिपरिमितजीवस्य ब्रह्मत्वबोधि-त्वाद्वाक्यस्येत्याशङ्क्याह **जीवाभिप्रायमिति** । जीवभावापन्नब्रह्माभिप्राय-मित्यर्थः । जीवनिर्देशवारणमिह वाक्ये न क्रियते तथा सत्यनुवादाभाव-प्रसङ्गादित्याह **न जीवपरमिति** । मनुष्यग्रहणं शूद्रादौ मातिप्रसञ्जीति

२३० । १६ संकोचयति **त्रैवर्णिकानिति** । अन्तःसंज्ञानां स्थावराणां मोक्षमिच्छतां चानर्थित्वात्कर्मण्यनधिकारः । काम्यग्रहणेन शुद्ध्यर्थे§ नित्येषु कस्य-चिन्मुमुक्षोरस्त्यधिकार इति सूचयति । तिरश्चां वेदार्थज्ञानादिसामग्र्यभा-वेनाशक्तत्वम् । देवानां स्वदेवत्ये कर्मणि आत्मोद्देशेन स्वकीयस्य त्यागा-योगादशक्तिः । ऋषीणाम् आर्षेयवरणे ऋष्यन्तराभावादसामर्थ्यम् ।

षष्ठे हि फलार्थे कर्मणि सुखकामस्य|| तिर्यगादेरप्यधिकारः स्वर्ग-कामश्रुतेरविशेषाच्चातुर्वर्ण्यमधिकरोति शास्त्रमिति प्राप्ते सिद्धान्तितम् । त्रया-णामेवाधिकारः । वसन्ते ब्राह्मणो ऽग्नीनादधीत ग्रीष्मे राजन्यः शरदि वैश्य इति तेषामेवाग्निसंबन्धश्रवणादिति¶ । सिद्धान्तिनाप्यङ्गुष्ठमात्रसंसा-र्यनुवादाभ्युपगमात्संसार्येवायमङ्गुष्ठमात्र इति भाष्ये इष्टप्रसङ्गतामाशङ्क्याह **यद्येतदिति** ।

* सिध्यतीति २ पु॰ पा॰ । † स्यो भवितेत्येव १ पु॰ दृश्यते ।
‡ ब्रह्मण इति नास्ति २ पु॰ । § बुद्धिशुद्ध्यर्थमिति २ पु॰ पा॰ ।
|| स्वःकामस्येति १ पु॰ पा॰ । ¶ जै॰ सू॰ अ॰ ६ पा॰ १ सू॰ ४-५ । २५-३८

२३४ । २१ प्राणशब्दस्य प्रवृत्तौ निमित्तमाह **तद्वृत्तित्वादिति** । तस्मात्प्राणाद्वृत्तिर्वर्तनं येषां ते तथा । श्रुतौ त्रयस्त्रिंशतां पूरणाविन्द्रप्रजापती उक्तौ तौ च स्तनयित्नुयज्ञत्वेन व्याख्यातौ पुनः कतमः स्तनयित्नुः कतमो यज्ञ इति पृष्ट्वा यथाक्रममशनिरिति पशव इति च प्रयुक्तं तदुपपादयति **अशनिरिन्द्र इत्यादिना** । सा ह्यशनिरिन्द्रस्य परमेशना परमैश्वर्यम् । अरूपं यज्ञं द्रव्यतया रूपयन्तो यज्ञस्य रूपं पशवस्ते प्रजापतिरित्यर्थः । षडाद्यन्तर्भावक्रमेणेति भाष्यं व्याचष्टे **एतएवेति** । **पवते** पुनाति जगत् । अध्यर्द्धशब्द एकस्मिन्नपि यौगिकः । स ब्रह्म त्यद् इत्याचक्षतइति वाक्यं व्याचष्टे **स एवेति** । प्राप्तिरङ्गुल्यग्रेण चन्द्रादिस्पर्शः । प्राकाम्यमिच्छानभिघातः यथा भूमावुदकइवोन्मज्जनादि । ईशित्वं भूतभौतिकानामुत्पत्तिलयादावैश्वर्यम् । वशित्वं तेषां नियन्तृत्वम् । यत्र कामावसायिता नाम सङ्कल्पादेव सकलविषयलाभः । अनेकेषां शरीराणां प्राप्तिरिति प्रथमाख्या । द्वितीयां विविनक्ति **अनेकत्रेति** ।

२३६ । १३ **गोत्वादिवदिति** । प्रत्यभिज्ञा हि पूर्वावमर्शः स हि न वस्वादावदृष्टे सम्भवी अत एवाप्याभावः । मन्त्रादिसिद्धे वस्वादावसौ वसुरसावपि वसुरिति परामर्शसम्भवः । विंदिवत्वादिजात्यवच्छिन्नेश्वर्येषु पाकत्वावच्छिन्नपाकेऽगेज्योतिरादिकत्वे ऽपि शक्यः सङ्गतिग्रह इत्युत्तरार्थः । आक्षेपसमाधाने निगदव्याख्याते इत्यर्थः । **प्रमाणान्तरापेक्षवाक्यत्वादिति** । प्रमाणान्तरापेक्षत्वमेव हेतुः शब्दं प्रति सन्देहात्प्रश्ने स्फोट इति पूर्वपक्षो वर्णत्वेन सिद्धान्त इति न भ्रमितव्यम् । स्फोटवादिना ऽपि नित्यशब्दाद्वेदादुत्पत्त्यभ्युपगमेन सूत्रव्याख्यानात् । तस्माद्वर्णात्स्फोटाच्च देवादुत्पत्त्याक्षेपः क्रियते वर्णानामनित्यत्वात्स्फोटस्य चाप्रामाणिकत्वादिति । स्फोटपक्षस्त्वेकदेशिन इत्यभिप्रेत्याह **आक्षेपन्तीति** । नन्वनित्यत्वे ऽपि वर्णाना महाभूतवद्वेदादिहेतुत्वमित्याशङ्क्याह **अयमिति** । यथा ऽऽग्नेयादीनां फलकारणत्वान्यथानुपपत्त्यपूर्वसिद्धिः एवं वर्णानामर्थधीहेतुत्वान्यथानुपपत्तिसिद्धः संस्कारः स चार्थापत्तेः । प्रागज्ञातत्वादपूर्वमुत वर्णोपलम्भजो वर्णे स्मृतिकर इति विकल्प्य क्रमेण दूषयति **न तावदित्यादिना** । अर्थधीप्रसवावमेयः

२३८ । १० संस्कारः क्रिमज्ञातः शब्दसहकार्युत ज्ञात । नाद्य इत्याह **न हीति** ।

¹ प्रमाणान्तरापेक्षत्वादितीति श्रताकाकारः २ पु । ² अर्थप्रतिपत्तेरिति २ प पा० ।

# अथ प्रथमाध्यायस्य चतुर्थः पादः ।

२८० । ११ **आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥**

अर्वाचीनमहत्तत्त्वापेक्षया पूर्वकालत्वमविप्रकृष्टमव्यक्तस्य परशब्द आह तया च कारणत्वसिद्धिः । नियतप्राक्तनत्वं हि तदित्यर्थः । ननु सिद्धे गतिसामान्ये का शङ्का महतः परमित्यादिवाक्यार्थनिर्णये वा कथं गतिसामान्यसिद्धिः । उच्यते ।

असाधि प्रतिवेदान्तं ब्रह्मकारणतागतिः ।
प्रतिवाक्यं न तत्सिद्धिः क्व चिदन्यार्थदर्शनात् ॥

पूर्वत्र हि प्रधानादेव सर्ववेदान्तार्थ इति प्रत्यवस्थिते तन्निषेधेन सर्ववेदान्तेषु ब्रह्मावगतिः साधिता इह तु तामुपेत्य प्रधानादपि कारणत्वेन समन्वयविषयः । न चानेककारणवैयर्थ्यम् । कल्पभेदेन व्यवस्थोपपत्तेरिति प्रत्यवस्थीयते । सूत्रकारो ऽप्यपिशब्दमेकशब्दं च प्रयुञ्जानो ब्रह्माद्वैककारणे पूर्वपक्षः क्वाचित्कश्चायं विचार इति सूचयां बभूव । अव्यक्तपदं प्रधानपरं शरीरपरं वेति स्थानक्रमश्रौतपारिशेष्याभ्याम् उभयोः प्रत्यभिज्ञानात्संशयः । साङ्ख्यानां श्रुतिस्मृत्योरनुमानसिद्धान्तवादित्वेन तुल्यता । भाष्ये स्मृतिशब्दः साङ्ख्यस्मृत्यभिप्राय इत्याह **साङ्ख्येति** । शब्दादिहीनत्वादिति भाष्ये गुणवैषम्योत्तरकालभाविशब्दादिहीनत्वमुक्तं प्रधानकाले ऽपि सूक्ष्मशब्दादिभावादित्याह **शान्तेति** । शान्तः सात्त्विको घोरो राजसो मूढस्तामसः । श्रुतिस्मृतिन्यायेति भाष्यं व्याख्याति

२८१ । १४ **श्रुतिरिति** । भेदानां महदादिविशेषाणां कारणमव्यक्तमस्तीति संबन्धः । कुतः परिमाणात् । महदादि अव्यक्तकारणकमव्यापित्वाद् घटवत् । सत्कार्यवादे प्राक्कार्योत्पत्तेरव्यक्तकार्यत्वात्कारणे ऽव्यक्तशब्दप्रयोगः । तावेव प्रतिज्ञादृष्टान्तौ । समन्वयात्सदनुरागविज्ञानवेदनीयत्वात् । यद्येन समन्वितमिति सामान्येनात्र व्याप्तिः । कारणशक्तितः कार्यस्य प्रवृत्तेः कारणगताव्यक्तकार्यं हि शक्तिरित्यर्थः । इदमस्य कारणमिदमस्य कार्यमिति विभागात् । अव्यक्तकार्यसत्त्वरहितस्य नृश-

कृत्वत्कारणत्वाऽयोगादित्यर्थः । प्रलयावस्थायां वैश्वरूप्यस्याऽविभागाल्लीनानभिव्यक्तकार्याश्रयो ऽस्त्यव्यक्तमिति ।

अव्यक्तपदेन किं रूढेः प्रधानप्रतीतिर्योगाद्वा स्मार्तक्रमानुगृहीतयोगाद्वा । नाद्य इत्याह **लौकिकी हीति** । यदेव लौकिका इति शाबरं वचः* । लोकवेदयोः शब्दार्थभेदो लौकिका वैदिका इति व्यपदेशभेदादेतद्वै दैव्यं मधु यद् घृतमिति देवमधुनो घृतत्वाभिधानाच्चेति प्राप्य राद्धान्तितम् । लोकावगतसंबन्धशब्दानां वेदे बोधकत्वोपपत्तेरैक्येन च प्रत्यभिज्ञानाद् घृते मधुत्वस्य स्तुत्यर्थत्वाच्चैक्यं शब्दार्थयोरिति । द्वितीयं प्रत्याह **योगस्त्विति** । तृतीयं निराकरोति **प्रकरणेति** । अयं भावः । इह विष्णोः पदं पुरुषः प्रधानं तत्प्रतिपत्त्यङ्गानि इन्द्रियादीनि इन्द्रियेभ्यः परा इत्यादिना निर्दिश्यन्ते । तानि चात्मानं रथिनमिति वाक्ये रथादिरूपितान्यत्र† गृह्यन्ते । एवं स्थिते महतः परमव्यक्तमित्यत्र पौरुषेयवाक्यस्थपदार्थतत्क्रमापेक्षप्रधानप्रत्यभिज्ञा दुर्बला । प्रकरणाधीनपदार्थाश्रयत्वादभिधेयाकाङ्क्षाश्रयत्वाच्च पारिशेष्यनिमित्ता शरीरप्रत्यभिज्ञा प्रबला । तथा हि । रथत्वेन रूपितं शरीरं पुरुषपरत्वप्रतिपादकवाक्यान्वयमर्हति इतरथा निष्प्रयोजनत्वात् । न च स्वाभिधेयावरुद्धा इन्द्रियादिशब्दास्तदभिदधतीति अस्ति अव्यक्तशब्दापेक्षा शरीरस्य । अव्यक्तशब्दो ऽपि यौगिकत्वादभिधेयविशेषाकाङ्क्षी स्वशब्दोपात्तेन्द्रियाद्यभिधानुमतमः शरीराकाङ्क्षीति शरीरमेवाव्यक्तशब्दार्थ इति । विषयांस्तेषु गोचरानिति श्रुतिं व्याचष्टे **तेष्विति** । विषयानुद्दिश्य मार्गत्वं विधेयम् । स्वगोचरमात्मस्य चरन्तीति विपरिणामानुषङ्गः । आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण इत्येतद्व्याचष्टे **आत्मेति** । युक्तमिति भावे निष्ठा । क्रियाविशेषणं चैतत्तदेव दर्शयति **योग इति** । प्रकरणपरिशेषाभ्यामित्युक्तम् । " । १२

ननु प्रकरणं कर्तव्यमितिकर्तव्याकाङ्क्षम्‡ वचनं कथमिह तदित्याशङ्क्याह **प्रधानस्येति** । प्रधानस्यानुक्ते ऽयोदाकाङ्क्षा ऽऽद्विषयेति सिध्यति । कारणद्वयानुगतं लक्षणमिदमेवेत्यर्थः । किं प्रधानमत आह **गन्तव्यमिति** । इन्द्रियादयश्च तस्य परत्वप्रतिपत्त्यङ्गम् । संस्काराश्चैतन्यप्राप्त्यर्थापि । परत्वविज्ञान-

[Margin: २८२ । २]

* प्रवर्तमिति २-३ पु॰ पा॰ । † निरूपितानीति २ पु॰ पा॰ ।
‡ इतिकर्तव्यविशेषाकाङ्क्षमिति २-३ पु॰ पा॰ ।

यानित्यादिश्रुतौ भाष्ये चासंयमाभिधानमनुपयोगीत्याशङ्क्याह **असंयमेनेति** । संयमाभावे मोक्षाभावेन तद्भाव एव दृढीकृत इत्यर्थः । यदुक्तं पूर्ववादिना
२८२ । १० महतः परमित्यत्र परशब्दः कारणवचन इति तत्राह **परशब्द इति** । मनआदावर्थादिकारणत्वासंभवादस्मिन्प्रकरणे परशब्दः श्रेष्ठवचन* इत्यर्थः । इहाध्यात्मप्रकरणे आन्तरत्वाच्छ्रैष्ठ्यं वक्तव्यं तदर्थेषु नास्तीति शङ्कते **नन्विति** । नामैव शब्दो वागभिव्यङ्ग्यः । स एव श्रोत्रेण ग्राह्य इति द्विरुपात्तः† । कामो मनसो विषयः कर्म हस्तयोः । ननु मनस इन्द्रियत्वेनार्थेभ्यो ऽपरस्य कथं तेभ्य एव परत्वम् अत आह **महत्त्वेनेति** । आत्मानं रथिनमित्यत्र य आत्मशब्दः स एव बुद्धेरात्मेत्यत्र प्रत्यभिज्ञायत इत्यभिप्रायेणात्मशब्दादिति भाष्यम् । अन्यथा ऽऽत्मशब्दमात्रस्य प्रकृतरथिग्रहणहेतुत्वाभावादित्याह **तत्प्रत्यभिज्ञानादिति** । इन्द्रियद्वारा बुद्धिस्था भोग्यास्तत्र पुरस्वाम्यं भोगाश्रयत्वम् । आपनाद् व्याप्तेः । बुद्धिमात्रादस्मदादिबुद्धेः । ननु रथिनः संसारिणः कथमसंसार्यात्मत्वेन निर्देशो ऽत आह **तथा हीति** । अश्नुत्यवगच्छति । भाष्योदाहृतायां यच्छेद्वाङ्मनसी इति श्रुतौ वाक्छब्दे द्वितीयालोपश्छान्दस इत्यर्थः । शरीरमेव रूपकेण रथेन विन्यस्तं रूपितम् इति सप्तपदार्थः । अनुशयो ऽसंतोषः । मत्सरं सोमम् श्रीणीत मिश्रयेत् । **एवं सतीति** । कार्यकारणाभेदे सतीत्यर्थः । सेश्वराणामीश्वराद् अनीश्वराणां जीवेभ्य इति सम्बन्धः । प्रमाणैर्न व्यज्यते न निरूप्यत इत्यव्यक्तत्वमित्यर्थः । **तदाश्रयत्वात्** तद्विषयत्वादित्यर्थः । आधारवाची आश्रयशब्दः । अविद्या ऽप्येकेति भ्रमादाशङ्क्य **स्यादेतदिति** । अविद्या ब्रह्मगता निवर्तते न वा । प्रथमे सर्वमुक्तिः द्वितीये मुक्तानां पुनर्बन्ध इति अविद्याद्वैतमुपेत्य सर्वमुक्तेरापादनादपरिहारत्वमाशङ्क्य भाष्य-
२८५ । ७ भाष्यमाह **अयमिति** । पूर्वभ्रमकॢप्तेनाऽप्रधानेनात्मनो ऽविवेकसम्भवादविवेकप्रतियोगित्वेनापि कृतं प्रधानेनेत्यर्थः । यद्यविद्या नाना कथं तर्हि श्रुतावव्यक्तमित्येकवचनमित्यत आह **अविद्यात्वेनेति** । **निमित्तनयेनेति** । प्रेरकतया अविद्याविषयत्वेन च तत्प्रेरकत्वं गन्धस्येव घ्राणं प्रति । **उपादाननयेनेति** । जगद्भ्रमाधिष्ठानतयेत्यर्थः ।

* श्रेष्ठपर इति ३ पु० पा० । † द्विरुक्त इति २-३ पु ।

**विद्यास्वभावे इति ।** निरवद्यमिति श्रुत्यवगतनिर्दोषज्ञानात्मत्वं २८६ । ६ विद्यास्वभावत्वम् । एवं च चिद्रूपत्वं जीवे ऽपि समं वाक्यजं प्रमारूपत्वमसिद्धमिति केषां चिदाक्षेपो ऽनवकाशः । स्वरूपमविद्याश्रयो बिम्बं तु ब्रह्म निरवद्यमिति किं न स्यादिति चेद् न । बिम्बस्य स्वरूपातिरेके कल्पितत्वात् । अनतिरेके स्वरूपस्यैव निरवधित्वात् । मुखमात्रस्य तूपाधियोगः परिच्छिन्नत्वादविरुद्धः । अपि च दर्पणाद्युपाधेर्विषय एव मुखं नाश्रयः । निर्विशेषब्रह्मस्वरूपस्याविद्यासंबन्धसम्भवः । इत्यनादित्वौ जीवाविद्ये परस्पराधीनतया अविद्यातत्संबन्धवदुपेये इति ।

ये त्वाहुर्ब्रह्मणो जीवभ्रमगोचरस्याधिष्ठानतयोपादानत्वे सो ऽकामयत स्वयमकुरुतेति च न स्यात्प्रतिजीवं च भ्रमासाधारण्याद् जगत्साधारण्यानुभवविरोधः । भ्रमजस्य चाकाशादेरज्ञातसत्त्वायोगः तस्मादीश्वरस्य प्रतिबिम्बधारिणी साधारणी माया । तदाश्रयश्च जीवोपाधयो ऽविद्या सन्त्विति । तान् प्रति ब्रूमः । अकामयताकुरुतेति च कामकृती जीवाविद्याविवर्तः । न च ब्रह्मविक्रियाविवर्तनेश्च विवर्ते हेतुः सर्प इव विसर्पणस्य । प्रतिमाणवकवर्त्यविद्याभिर्वर्णेषु स्वरादिवैशिष्ट्येन क्रमस्योपाध्यायवक्त्रोद्गतवेदस्येव प्रपञ्चसाधारण्यसिद्धिः । अधिष्ठानस्य साधारण्येन साधारण्यं प्रमाते ऽपि समं सर्वप्रत्यक्षाद् ब्रह्मणः । अज्ञातसत्त्वं प्रपञ्चस्य व्यावहारिकसत्त्वात् । न च जीवाविद्याजत्वे तदयोगः । स्वेन्द्रजालादिवदुपपत्तेः । यत्तु जीवस्य मनोवच्छिन्नत्वं भूतसूक्ष्मावच्छिन्नत्वं च दूषितं तदस्मदिष्टमेव सांप्रतम् । अस्माभिर्जीवस्यानाद्यविद्यावच्छेदाभ्युपगमादिति । अपि च ।

न मायाप्रतिबिम्बस्य विमुक्तैरुपसृप्यता ।
अवच्छेदान्न तज्ज्ञानात्सर्वविज्ञानसम्भवः ॥
अधिष्ठाने तु जीवैर्भिन्नाविद्याभिरपावृते ।
जगद्भ्रमप्रसिद्धौ किं साधारण्येह मायया ॥

ग्रहीतृस्थाया अप्यविद्याया ग्राह्ये स्वसमजडावभासहेतुत्वमविरुद्धं पीतस्येव शङ्खे पीतिमप्रतिभासहेतुतेति विशदमशेषम् । यत एव ब्रह्माविद्याविषयो ऽत एव ब्रह्मविषयबोधराहित्यं जीवानामाहेत्यर्थः ।

२८६ । ८ उपाधिभूताविद्यैवाप्रबोधे ऽपि हेतुरित्याह **सत्यामिति** । जीवाव्यक्तयोरनादित्वेन नियतं पौर्वापर्यं नास्तीति न पौर्वापर्यं न च तिन्नयम इति यद्यपि तथापि जीवत्वनियामके ऽव्यक्ते पूर्वत्वमुपचरितमित्यर्थः । यथा बलीवर्द्दमानयेत्युक्ते* गामानयेति प्रयोगे गोपदमितरगोविषयमेवमव्यक्तपदमित्यर्थः । **प्रकृतेति** । अप्रसङ्गेनेति च्छेदः । अव्यक्तपदस्य स्थूले देहे मुख्यत्वाभावादौपचारिकत्वं स्यान्न च तदुक्तम् । सकृच्छ्रुतस्य सूक्ष्मस्थूलदेहविषयतया मुख्यगौणे वै वृत्त्याघातादत आह **न च मुख्ययेति** । अतत्परमिति च्छेदः । अन्नोपघातनिराकरणाकाङ्क्षायां वक्तुस्तत्प्रयुक्तकाकपदं काकगतोपघातकत्वं लक्षयद्यथा काकतदितरसाधारणमेवं पुरुषपरत्वप्रतिपत्त्यर्थं तुल्यवदाकाङ्क्षितप्रस्तुतशरीरद्वयं छत्रिन्यायेन लक्षयत्यव्यक्तपदं न सूक्ष्ममेवाभिधत्त इत्यर्थः । पूर्वं मायाभिधानद्वारा शरीरलक्षणोक्ता इदानीं तु सूक्ष्मशरीराभिधानद्वारेण एवमपि हि प्रधानं निरस्तं भवतीति । त्वङ्मांसरुधिराणि मातृतः । अस्थिस्नायुमज्जानः पितृतः । गतैः षट्कोशैरारब्धं षाट्कोशिकम् । व्यवहितं जीवविषयं प्रतिवचनमिति भाष्यस्थव्यवहितपदार्थमाह

२८८ । १८ **इत्यनेनेति** । [illegible]इत्यादि सनातनमित्यन्तं परमात्मप्रतिवचनप्रतिज्ञावाक्येन व्यवहित[illegible] जीवप्रश्नस्य प्रतिवचनमित्यर्थः । प्रश्नाभेदे दूषणा-[illegible] **एकत्वेऽपीति** । [illegible]विद्ययोर्द्वित्वात्तत्त्वमस्याविशब्दविरोध इत्यर्थः । परमात्मप्रश्न[illegible]प्रश्नद्वैधे पितुः सौमनस्याग्निज्ञानात्मज्ञानविषयं यद्वरत्रयं[illegible] तत्राविरोधो ऽन्यत्र धर्मादित्यादेः स्यान्निरर्थकत्वादित्यर्थः । अथ [illegible]थानुपपत्त्या वरान्तरं कल्प्येत तत्राह **तुरीयेति** । सन्तु त्रयो वराः परमात्मप्रश्नस्तु[illegible]भूतो ऽस्तु यथा सृङ्कां च गृहाणेत्यवृतामपि रत्नमालां प्रीत्या ददौ नेत्याह **वरप्रदानानन्तर्भावे इति** । महतः परमव्यक्तमिति प्रधानाभिधानमस्तीति योजना । सृङ्कां चेति चशब्दः ऽवृतैव मालां ददातीति गमयति नैव महतः परमित्यत्र । अतो वरप्रदानानुसारेणैवार्थप्रतिपादनम् । [illegible] सत् देहादिव्यतिरेकधर्माद्यन्यत्वप्रश्नभेदाद् द्विः

२८९ । ६ कृतः प्रश्न इत्यर्थः । **अत एवेति** । जीवपरयोरभेदादित्यर्थः । शतायुषः पुत्रपौत्रान् वृणीष्वेत्यादिस्तत्कामः । त्वादृङ् नो भूयान्नचिकेतः प्रष्टेति

* उदाहृतं २-३ पृ. पा. । † १ कठवल्ल्यां श्रुतिगता न सङ्काशब्दो मालावाची ।

विशेषणपरत्वात्तदीयप्रश्नप्रशंसा । जीवे पृष्टे तं दुर्दर्शमिति तद्व्यतिरिक्तपरमात्मप्रतिवचनमाम्रप्रश्ने कोविदारप्रतिवचनवदसङ्गतम् । अत एव जीवप्रश्नतत्कर्तृप्रशंसा ऽपि जीवस्य परमात्माभेदप्रमित्यर्थत्वेन दृष्टार्था स्यादित्याह **यदि पुनरिति** । एवं प्रतिवक्तृप्रवृत्त्या जीवपराभेदं साधयित्वा प्रष्टृप्रवृत्त्या ऽपि साधयति **अपि चेत्यादिना** । तदुत्तरे तस्य प्रश्नस्योत्तरे तमेव विषयं यद्यवदध्याज्ज्ञानीयादित्यर्थः । यत्प्रश्नेति भाष्ये यच्छब्दो विषयपरो न प्रश्नपरः । विषयगौरवादि प्रश्न प्रशंसेत्याह **यस्मिन्निति** ।

अधिकरणादावव्यक्तशब्दस्य पौरुषेयी रूढिर्वेदानुपयोगिनीत्युक्तम् इदानीं महच्छब्दस्येव वेदविरोधाद्व्याख्या चाव्यक्तशब्दस्य प्रकरणादिना वेदे शरीरपरत्वावधारणादित्युच्यत इत्याह **अनेनेति** । साङ्ख्यैः सत्तामात्रे महच्छब्दः प्रयुक्त इति भाष्यमयुक्तं तैर्बुद्धेर्महत्त्वेन स्वीकारादित्याशङ्क्याह **पुरुषार्थेति** । अर्थक्रियाकारिणि सच्छब्दः प्रयुक्तः पुरुषापेक्षितप्रयोजनकारि महत्त्वं सतत्प्रत्ययो ऽपि स्वरूपपरो न सामान्यवाच्यर्थः । कार्यानुमेय महन्न प्रत्यक्षमिति मात्रशब्दः ।

२९० । ४

गूढ आत्मा अग्र्या इत्याग्र्या सूक्ष्मवस्तुविषयत्वात् सूक्ष्मा । अशब्दमिति शब्दादिगुणरहितम् । अभूतभौतिकमित्यर्थः । अव्ययमपचयरहितम् । प्राक्प्रध्वंसाभाववर्जितम् । अनाद्यनन्तम् अत एव नित्यम् । महतः तत्त्वात्परम् । ध्रुवमपरिणामि । निचाय्य ज्ञात्वा । मृत्युमुखात् तन्मुखं संसारः । स्वर्गाय हितं स्वर्ग्यम् । अध्येप जानामि । लोककारणविराड्रूपोपास्यत्वाल्लोकादिरित्यो ऽग्निः । याः स्वरूपतः यावतीः सङ्ख्यातः यथा वा ऽग्निश्चीयते तत्सर्वं तस्मै नचिकेतसे उवाच । हन्त इदानीं गुह्यं गोप्यं सनातनं चिरन्तनं ब्रह्म हे गौतम ते प्रवक्ष्यामीति ब्रह्मप्रतिवचनं प्रतिज्ञाय जीवं चाह आत्मा मरणं प्राप्य यथा भवति तथा च प्रवक्ष्यामीति । योनिमन्ये देहिनः प्रपद्यन्ते मनुष्यादिशरीरग्रहणाय अन्ये स्थावरं स्थाणुं संयन्ति कर्मज्ञानानुसारेण । स्वप्नजागरितान्ता मध्ये उभे येनात्मना ऽनुपश्यति लोकः इह देहे यच्चैतन्यं तदेवामुत्र परत्र । असंसारि ब्रह्म । यच्चामुत्र तदेवेह देहे अनुप्रविष्टं वर्तते य इह नाना-

* प्रश्नशब्दो नास्ति २-३ पु० ।    † ब्रह्मशब्दो नास्ति २ पु० ।

त्मनि नानेव मिथ्या भेदं पश्यति स मरणान्मरणं प्राप्नोति । पुनः पुनर्म्रि-
यते । त्वां बहवः कामा न लोलुपन्त लुप्तं छेदने श्रेयसो विच्छेदं न
कृतवन्तः ततो विद्यार्थिनं त्वां मन्ये वेद जाने ऽहं पुरुषम्* ॥

२९० । ८ **चमसवदविशेषात् ॥ ८ ॥**

अजामन्त्रः प्रधानपर उत तेजोबन्नरूपावान्तरप्रकृतिमायारूपपर-
मप्रकृत्योरन्यतरपर इति संशयः । अजाशब्दस्य तु छागातो ऽपकृष्टस्य
प्रधानमाययोस्तेजोबन्ने च गुणाद् वृत्तिसम्भवात् पूर्वत्रार्थतः प्रधानप्रत्यभि-
ज्ञाया अभावान्नाव्यक्तपदवाच्यतेत्युक्तमिह तु त्रिगुणत्वादिना प्रधानप्रत्यभि-
ज्ञानात् तत्परो मन्त्र इति पूर्वपक्षमाह **प्रधानमेवेति । एका चेति ।**
अनेन मायायाः प्रतिजीवं भेदादेकामित्येकत्वानुपपत्तिरुक्ता । न च
गौणत्वं दोषः समत्वादित्याह **परेणापीति ।** उपचारेण कारणे रोहित-
त्वादारोपकल्पने त्वस्तीति विभागः । दारशब्दो नित्यबहुवचनान्तः ।
तामेवाविद्ययेति भाष्ये तच्छब्दार्थो विषयज्ञानाधारः प्रधानकार्यमन्तः-
करणमित्याह **विषया हीति ।** चितिशक्तिरात्मा स्वयं सुखादिरूपेणापरि-
णामिनी । परिणामिन्या बुद्धौ वस्तुतो ऽप्रतिबिम्बत्वादप्रतिसङ्क्रमा । अवि-
द्ययेत्येतद्व्याचष्टे **विपर्यासेनेति ।** साङ्ख्यानामस्ति भ्रमः स तु बुद्धा-
वेवेति विशेषः । आत्मवेदनापस्य योऽद्विवृणोति **बुद्धिस्थानइति ।** विप-
र्यासमिद्धं बुद्धिस्थेन बुद्धिधर्मानात्मन्यभिमन्यमानेत्यर्थः । कृतत्वोपपत्तये
ऽपवर्गशब्दस्तदुपायपर इत्याह **गुणेनेति ।** न चानुवादसामर्थ्यात्प्रमाणं कल्प्यं
विरोधादित्याह **स चेति ।**

व्यवस्थानाच्छाखान्तरेणानिर्णयमाशङ्क्याह **सर्वेति ।** गुणवचनरोहि-
तादिशब्दैर्लक्षणयापि निरूढया मुख्यवत्प्रत्यायकैः प्रतीतिमभिप्रेत्य सति
मुख्यार्थसम्भवइत्युक्तम् । नन्वजापदजेति गुणवृत्त्यङ्गीकाराद्रूढिस्त्यक्ता
२९३ । ८ नेत्याह **अत्र त्विति ।** रूढेरपहृते योगे रूढार्थगुणयोगात्सिद्धा वृत्तिरा-

* अत्र प्रथमं आनुमानिकाधिकरणं । साङ्ख्याधिकरणं १ वा सम्पूर्णम् । तत्र सूत्रा-
णि ७ आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च १ सूक्ष्मं
तु तदर्हत्वात् २ तदधीनत्वादर्थवत् ३ ज्ञेयत्वावचनाच्च ४ वदतीति चेन्न प्राज्ञो
हि प्रकरणात् ५ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ६ महद्वच्च ७ ॥

। भाग वृत्ति २ पु पा ।

श्रिता इति रूढिः स्वीकृता। इतरथा गुणयोगस्यैवासिद्धेरिति। न केवलं शाखान्तरान्निर्णयः प्रकरणादपीत्यव्याकृतपक्ष प्रस्तौति **अपि चेति**। तस्य जगदुत्पत्तौ साध्यायां किं सहकारिकारणमिति पृच्छ्यते। तत्किंकारणमिति बहुव्रीहिः। ध्यानमेव योगो जीवस्य ब्रह्मणैक्य*योजकत्वात्। आत्मप्राप्तिस्त्वनात्मविरहेण स्थितिः। **नानेत्युक्तमिति**। आनुमानिकाधिकरण इति नानाविद्यास्वप्येकामित्येकत्वं जात्यभिप्राय प्रकरणाद्विद्यानिश्चयात्।

देवात्मशक्तिमिति। देवात्मविषयां मायिनं मायाविषय महेश्वरम् इत्यर्थः। भाष्ये च पारमेश्वर्याः शक्तेरिति परमेश्वरविषयाया इत्यर्थः। एवं च

जीवस्थाया अविद्याया विषयं ब्रह्म शुक्तिवत्।
ऊचे वाचस्पतिर्भाष्यकृत्योर्हृदयवेदिता॥

**न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥** २९४। ८

पञ्च पञ्चजना इति सांख्यीयतत्त्वपरमुतार्थान्तरपरमिति योगरूढ्य- विनिगमाद्विशयः। पूर्वत्राध्यात्मप्रकरणे रूढत्यागायाः अमत्वस्याद् अजा तेज- आदिकेत्युक्तमिहापि रूढेर्मनुष्यपदे वाक्यस्य निस्तात्पर्यप्रसङ्गाद्वयवत्त्या सांख्यस्मृत‡तत्त्वपरतेत्यवान्तरसङ्गतिमधिकरणसङ्गतिं¹ चाहेत्यर्थः। ननु पसर्जनस्य संख्यायाः संख्यान्तरेण विशेषणायोगात् कथं पञ्चविंशतिलाभा- ऽत आह **पञ्चजना इति**। हेति विशेष्यजनैः संख्यान्तरान्वय इत्यर्थः। न च पञ्चसंख्यावच्छेदाद् जनानां नैराकाङ्क्षम्। संख्यान्तरश्रवणे सति रक्तपटन्यायेनाकाङ्क्षोत्थापनादिति। वाक्यस्य निस्तात्पर्यं तात्पर्याभाव इत्यु- क्तः **सर्वस्यैवेति**। जायन्त इति व्युत्पत्त्या जनशब्दव्याख्या। ननु रूढि- त्यागेन मनुष्यसम्बन्धिनः प्राणादयो लक्ष्यन्ते तथा च न निस्तात्पर्यमत आह **तत्रापीति**। रूढ्यर्थपदेऽपीत्यर्थः। वाक्यविरोध व्याघात एकत्र " । १९

* ब्रह्मैक्येति ३-३ पु पा।

† अत्र द्वितीय चमसाधिकरणं सांख्याधिकरणं ३ या पूर्वम्। तत्र सूत्राणि ३-चम- सवदविशेषात् ८ ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ९ कल्पनोपदेशाच्च मध्वा- दिवदविरोधः १० ॥

‡ स्मृतेति नास्ति ३-३ पु।

¹ अधिकरणसङ्गतिमिति न दृश्यते १ पु।

द्दीति । आत्माकाशव्यतिरिक्तानां त्रयोविंशतितत्त्वानामपि प्रधानस्य विधाकरणात्पञ्चविंशतित्वं श्रुतौ । स्मृतौ तु तत्त्वेष्वात्माकाशावन्तर्भाव्य

२९५ । ६ प्रधानं चाभित्वा पञ्चविंशतितत्त्वगणनेत्यविरोधमाह **न चाधारत्वेनेत्या-दिना** । **द्विरूपभावेन** पृथग्भावेन । भाष्ये उदाहृतां मायां व्याख्याति **मूलेति** । महानित्यध्यवसायात्मिका बुद्धिरुच्यते । अहङ्कारो ऽभिमानलक्षणः । तन्मात्राणि सूक्ष्मभूतानि पञ्च भूतानि स्थूलानि । अहङ्कारतत्त्वम् उद्भूततमस्कम् । प्रकृतिस्तन्मात्राणाम् । उत्कटसत्त्वं त्विन्द्रियाणाम् । रजस्त्वहङ्कारगं* गुणद्वयप्रवृत्तिहेतुर्नारम्भकमित्यर्थः । ननु षोडशको विकार गते†ति कथं पृथिव्यादीनां घटादिप्रकृतित्वादत आह **यद्यपीति** । **न ते पृथिव्यादिभ्यस्तत्त्वान्तरमिति** । उभयेषां स्थूलतेन्द्रियग्राह्यता च समेति न तत्त्वान्तरत्वेत्यर्थः । आकाशात्मानौ विहाय या पञ्चविंशति-रुदिता तस्यां नावान्तरत्वेन पञ्चसंख्यानिवेश इत्याह **न खल्विति** । उद्धृताकाशानां पृथिव्यादीनां ज्ञानेन्द्रियेभ्यो घ्राणमादाय पूरणमयुक्तम् । तेषां तस्य च साधारणोपाध्यभावादित्याह **नापीति** । तथा घ्राणातिरिक्तानां ज्ञानेन्द्रियाणां कर्मेन्द्रियेभ्यो वाचमाहृत्य न पञ्चसंख्या निवेश्येत्याह **नापि रसनेति** । तथोद्धृतवाचा कर्मेन्द्रियाणां न मनसा पञ्चत्वलाभ इत्याह **नापि पाणीति** । **समासार्थसंख्यान्तरेण विशिष्यतइति** । साक्षात्पूर्ववादिनि निरस्ते समासं पञ्चजनशब्दे ऽनभ्युपगच्छन्तमुत्थापयतीत्याह **पूर्वपक्षैकदेशिनमिति** । अस्यायमभिप्रायः । यद्यप्यत्र नानाभावान्न सन्ति पञ्च पञ्च सत्यास्तथापि पञ्च पञ्च पूल्य इत्यादौ पञ्चविंशतिसंख्यायाः पञ्चभिः पञ्चसंख्याभिरविनाभावादिह ता निर्दिश्यमानाः स्वव्याप्तां महासंख्यां लक्षयन्तीति ननु तत्रापि कथं महासंख्याया अवान्तरसंख्यासंख्याभिः संबन्धो ऽपेक्षाबुद्धिनाशे तन्नाशादित्याशङ्क्य साहचर्याभावे ऽपि हेतुहेतुमद्भावो ऽस्ति

२९६ । ८ संबन्धो लक्षणाबीजमित्याह **यद्यपीत्यादिना** । अपिशब्देन विद्यतपद्धा थात्मना महासंख्यास्ववान्तरसंख्या परं त्वपरिच्छेदिकेति सूचितम् । एवम समासमभ्युपेत्य लक्षणैव दोष इत्यभिप्रायाभ्युपगमं त्यजति **न च पञ्च-शब्द इति** ।

* गतर्मति ३-३ पु पा. । † तर्त्वेति १ पु. पा. ।

भाष्ये भाषिकेण स्वरेणेति । तस्यार्थः । अत्र मन्त्रे प्रथमः पञ्चशब्द आद्युदात्तः । द्वितीयः सर्वानुदात्तः । जनशब्दश्चान्तोदात्तः । तथा न द्वितीयपञ्चशब्दजनशब्दयोः समासादृते आकारस्यान्त्यस्योदात्तत्वमितरेषां चानुदात्तत्वं घटते । समासस्येति सूत्रेण समासस्यान्तोदात्तत्वविधानात् । अनुदात्तं पदमेकवर्जमिति सूत्रेण यस्मिन् पदे उदात्तः स्वरितो वा विधीयते तमेकं विहाय शिष्टस्यानुदात्तत्वस्मरणाच्च । एवं मन्त्रान्तोदात्तस्वरबलात् समासो निरणायि । भाषिकसंज्ञके तु शतपथब्राह्मणस्वरविधायकग्रन्थे स्वरितो ऽनुदात्तो वेति सूत्रेण यो मन्त्रदशायामनुदात्तः स्वरितो वा स ब्राह्मणे उदात्तो भवतीत्यपवाद आश्रितः । तत आकारादितरेषामनुदात्तानां ब्राह्मणे उदात्तत्वम् । उदात्तमनुदात्तमनन्त्यमिति सूत्रेण च मन्त्रदशायामुदात्तस्यानन्त्यस्य परत्वगतयो[1]र्ब्राह्मणस्यानुदात्तत्वं विहितम् । ततश्च नकारोपरितन आकार आकाशब्दे येनेन सन्नत्वेनोच्चार्यमाणो ऽनुदात्तो भवति । सति चैवमन्तानुदात्तस्वरो भाषिकग्रन्थसिद्धो भाषिक इति भाष्ये उक्तम् ।

ये तु

> छन्दोगा बह्वृचाश्चैव तथा वाजसनेयिनः ।
> उच्चनीचस्वरं प्राहुः स वै भाषिक उच्यते ॥

इति वचनमुदाहृत्यान्तोदात्तो भाषिक इति व्याचक्षते तेषामध्ययनविरोधः । अन्तानुदात्तं हि समाम्नातारः पञ्चजनपदमधीयते इति । हे आज्य त्वा पञ्चजनानां कृते गृह्णामीति मन्त्रैकदेशस्यार्थः । असमासमभ्युपेत्यैव द्विः पञ्चशब्दप्रयोगे दशानामेव लाभान्न सांख्यस्मृतिप्रत्यभिज्ञानमित्याहेति योजना ।

असमासपक्षे एव वीप्सां विहाय विशेषणपक्षमाशङ्क्याह **न चैकेति** । २९१ । ५

गुणादिशब्दवत् पञ्चशब्दस्य संख्यामुपसर्जनं कृत्वा प्राधान्येन द्रव्यपरत्वाद्गुणीभूत[2]संख्याया न संख्यान्तरेण विशेषणम् । तथा सति विशेष्येण द्रव्येण विशेषणेन च संख्यया युगपदाकृष्यमाणा सख्या नैकेनाप्यन्वियादित्यर्थः । **तद्वर्मिति** । नानाभावेन दूषितमपि । परमहर्षीणां

[1] पर संनतेति २ पु॰ पा॰ । [2] गुणभूतेति १ पु॰ पा॰ ।

संख्यान्तरानाकाङ्क्षानोपसर्जनन्यायाभ्यां दूषयितुं पुनरुत्थापयतीत्यर्थः । रूढौ सत्यामिति । तद्द्वारा प्राणादिषु लक्षणायां च सत्यामित्यर्थः ।

२९१ । १३ अनाकाङ्क्षां दर्शयति पञ्चपूलीत्यत्रेति । पृथक्त्वेन सहैकस्मिन्नर्थे या समवैति सा तथोक्ता ईबन्ताद्द्विगुसमासेन समाहाराभिधानात् पदान्तरोपात्तसंख्यया समाहारोऽवच्छेद्य उत्पत्तिशिष्टया तु समानपदस्थया समाहारिणः पूला अवच्छेद्या इति पञ्चपूलीत्यत्रास्त्याकाङ्क्षा पञ्चजना इत्यत्र त्वीबन्तत्वाभावान्न समाहारोऽप्रतीतेर्जनानां च स्वपदगतसंख्यया ऽवच्छिन्नत्वान्न संख्यान्तराकाङ्क्षेत्यर्थः । विजातीयविशेषणान्तरप्रयोगे च रक्तपटन्यायो न सजातीये प्रयोगे न हि भवति रक्तपटो रक्त इति । इहापि पक्षे नोपसर्जनन्यायमवतारयिष्यन्नाशङ्कते स्यादेतदिति । न हि सापीति । आत्माश्रयप्रसङ्गान्न संख्या तया ऽवच्छिद्यते । अतः संख्यान्तराकाङ्क्षेत्यर्थः । तत्र चोक्तो दोष इति परिहारभाष्यार्थमाह उक्त इति । पञ्चशब्दस्य संख्योपसर्जनद्रव्यवाचकत्वादुपसर्जनसंख्याया न शब्दान्तरोक्तसंख्यासंबन्ध इत्यसमासवत् समासेऽपि दोषः । समासे तु पञ्चशब्दोपात्तसंख्याया जनशब्दार्थं प्रति विशेषणत्वान्न न विशेषणान्वय । ननूपसर्जनस्यापि विशेषणान्वयः किं न स्यादत आह विशेषणापेक्षायां त्विति । नैरपेक्ष्यं हि सामर्थ्यं साकाङ्क्षत्वे सति स्वविशेषणेनाकृष्यमाणस्य न विशेष्यान्तरान्वय इत्यसमासः स्यादित्यर्थः । सापेक्षस्यासमासे उदाहरणमाह न हि भवतीति । ऋद्धविशेषणापेक्षस्य राज्ञो न पुरुषेण समासोऽपि तु पदवृत्तिरेवंप्रकारा ऋद्धस्य राज्ञ इतीति । उदाहृतभाष्यस्यायमर्थ इत्याह इत्यर्थ इति । प्रधानं द्विधा भित्त्वा अतिरेकसमाधानादभ्युच्चयमात्रत्वमिति चेत् का तर्हि गमनिका ऽत आह यदीति । प्रधानं भित्त्वा संख्योपपादनेऽपि तत्र नोपास्तिपरं वचनमिति यथावस्तु वक्तव्यम् । तत्राधारत्वेन भोक्तुरात्मनो भोग्यप्रतिष्ठाहेतुत्वेन पृथक्कारेऽप्याकाशपृथक्कारो निष्प्रयोजन इत्यर्थः । कथं चेति भाष्यमयुक्तम् पञ्चसंख्या-

२९८ । १० द्वयात् पञ्चविंशतिसिद्धेरित्याशङ्क्याह दिक्संख्ये इति । दिक्संख्यावाचिशब्दो संज्ञायां गम्यमानायाम् उत्तरपदेन समस्यते यथा दक्षिणाग्निः सप्तर्षयः इति सूत्रार्थः । तत्र च एकैव पञ्चसंख्या द्वितीयपञ्चशब्दस्य संज्ञा समासगतस्य न संख्यार्थेति ग्रन्थार्थः । यद्यप्यवयवाभिधानसापेक्षयोगान्नि-

रपेक्षरूढिर्बलीयसी तथापीह रूढमनुष्यग्रहं निरस्तात्पर्यमुक्तमित्यत आह **तद्यदीति ।** इह मनुष्या वाक्येन संबन्धार्हा अजामन्त्रे त्वध्यात्माधिकारच्छागा पूर्वापरवाक्याविरोधिनीति रूढेर्योगे ऽपहृते रूढ्यर्थसंबन्धानुगुणाद्वा ऽर्थान्तरवृत्तिसिद्धौ शब्दस्य न योगः कल्प्य इत्यत्रोदाहरणमाह **यथेति ।** उक्तं ह्यर्थवादेन यथा वै श्येनो निपत्यादत्त एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते यमभिचरति श्येनेनेति । दार्ष्टान्तिकमाह **तथेति ।** अवयवा २९८ । १८ र्थभूतपञ्चसंख्यासंबन्धानपेक्ष एकस्मिन्नपि मनुष्ये वर्तते । स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरा इत्यमरो हि जगौ । मनुष्ये रूढश्च पञ्चजनशब्दस्तत्संबन्धात्प्राणादिषु लक्षणया वर्त्स्यतीति वक्ष्यतीति । ननु रूढिरपि तत्त्वेष्वस्तु किं लक्षणया ऽत आह **न चैष इति ।** अस्तु तर्हि तत्त्वेषु लाक्षणिकः पञ्चजनशब्दो नेत्याह **एवं चेति ।** मन्त्रोक्तवाक्यशेषपर्यालोचनान्न प्राणादयः पञ्चजना इति तत्राह **न च कारणेति ।** यत्र वस्तुनि न विकल्प इति तत्राप्याह **न चेयमिति ।** उत्तरे मन्त्रे विधिश्रवणात्तदन्वयव्यतिरेकसिद्धतया ऽनूदितानामपि प्राप्तिः पुंसा विकल्पेन कर्तुं शक्येत्यर्थः । जनानां वाचकत्वेन संबन्धी शब्दो जनशब्द इति व्याख्यानाभावे दोषमाह **अन्यथेति ।** प्रत्यस्तमितो ऽवयवार्थो यस्मिन् समुदायशब्दार्थे सिद्धान्तरांभमते प्राणादौ जनशब्दस्य समुदायैकदेशस्यार्थो नास्तीति जनशब्दस्य प्राणादौ कथं प्रयोग इति यच्चोद्यं तदचोद्यं स्यादनुक्तोपालम्भत्वादित्यर्थः । भाष्ये समाने रूढ्यतिक्रमे वाक्यशेषवशात् प्राणादयो ग्रहीतव्या इति प्राणादीनां लक्षणार्हत्वमुक्तम् । वाक्यग्रहणं तेषां प्रमितत्वार्थम् । शेषग्रहणं संनिहितत्वार्थमिति लक्षणां दर्शयति । जनसंबन्धाच्चेति भाष्ये तस्य भावमाह **रूढ्यपरित्यागेनेति ।** रूढार्थसंबन्धादर्थान्तरप्रतीतिसिद्धौ न योगवृत्तिः प्रधानादौ कल्प्येति भाष्यार्थः । कल्प्या रूढियोगाद् दुर्बलेत्याशङ्क्य सूचात् कल्पमाह **ननु सत्यामिति ।** नोपसर्जनन्यायातिरेको करणापिधाय समर्थति चेत्युक्तम् । प्रयोगानुसारित्वाद् व्याकरणस्य तदभावान्न रूढिरित्याशङ्क्य **स्यादेतदिति ।** मनुष्येषु पञ्चज- २९९ । १८ नशब्दस्य लोके गव प्रयोगात्तत्संबन्धात्प्राणादिषु वृत्त्युपपत्तिः स्फुटा जनसंबन्धाच्चेति भाष्यसूचिता पृथङ् न वक्ति भगवान् भाष्यकारः प्राप्त्या तु रूढिं समर्थयते इत्याह **जनेष्विति ।** स्थवीयस्तया स्फुटयेत्यर्थः ।

शक्यो द्भिदादिवदिति भाष्ये उद्भिदधिकरण*मुदाहृतं तदेवम्— उद्भिदा यजेत पशुकाम इत्यत्रोद्भित्पदं कर्मनामोत विधेयगुणसमर्पकमिति संशये उद्भिच्छब्दस्य खनित्रादौ प्रसिद्धेः नामत्वे च यजिसमानार्थत्वेनानर्थक्याद् ज्योतिष्टोमे गुणविधिरिति प्राप्ते राद्धान्तः । अत्र हि यजेतेति यागेन भावयेदित्यर्थः । तथा चोद्भिदेति तृतीयान्तपदं यजिसामानाधिकरण्याद् यागनाम स्यात् । न चेदं वचनं गुणं शक्नोति विधातुम् । द्रव्ययागयोर्भेदादुद्भिदा यागेनेति सामानाधिकरण्यायोगात् । उद्भिद्वतेति कल्पने मत्वर्थलक्षणापातादुद्भिदा यागं भावयेद्यागेन पशुमिति वैयधिकरण्ये च यागस्य फलं प्रति साधनत्वं गुणं प्रति साध्यत्वमिति वैरूप्यापाताद्विध्यावृत्त्या वाक्यभेदात्त्र । उद्भिनत्ति साधयति पशुमिति यागे ऽपि प्रसिद्धिः स्यात् । न च नामवैयर्थ्यम् । अत्र नामत्वसिद्धावन्यत्र समे दर्शपौर्णमासाभ्यां यजेत दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यादौ नामवद्यागानुवादेन गुणफलविधिसंभवात् । न च ज्योतिष्टोमः प्रकृतो यत्र गुणो विधीयते । तस्मान्नामधेयमिति ।

एवं यथा सन्निहितयज्ञ्यनुरोधेनोद्भित्पदं यागनामधेयमेवं संनिहितवाक्यशेषात् पञ्चजनशब्दः प्राणादिषु रूढ इति भाष्यार्थः । यद्यप्युद्भित्पद यौगिकं तथापि सामानाधिकरण्यादवगते नामत्वे ऽवयवानुगमः क्रियत इति रूढितुल्यत्वाद्भाष्ये रूढित्वोक्तिः ।

यस्मिन्नव्याकृताख्य आकाशश्च प्रतिष्ठितः तमेव निष्प्रपञ्चं ब्रह्मात्मकममृतमात्मानं मन्ये । त्वं किं विद्वान् मर्तव्यादन्यो ऽमर्त्यः न किं तर्ह्यहमप्यविद्यया मर्त्यः । विद्वांस्तु सन्नमृतब्रह्मात्मक इति मन्त्रदृशो वचनं प्राणादीनां जीवनादिहेतूनां जीवनादिप्रदं त्वंपदतत्त्वं ये विदुस्ते तस्य स्वरूपं पुराणं चिरन्तनम् । अग्र्ये कार्यदशायामप्यनुप्रत्वेन भवमग्र्यं ब्रह्म निश्चिक्युर्निश्चयेन ज्ञातवन्तः । पाञ्चजन्यया प्रजया विशतीति विशा मनुष्यरूपया । इन्द्र आहुतिस्ये घोषा असृजत सृष्टा । यत्पर्वोर्द्धं कालानवच्छिन्नमुक्तं तज्ज्योतिषामादित्यादीनां भासकममृतत्वेन आयुष्ट्वेन जीवन-

' जै. सू. अ. १ पा. ४ सू. २ । † समर्थकमिति १ पु पा. ।
‡ स्यशब्दो नास्ति ३ पु ।

गुणवतया च देवा उपासते तेन तथायुष्मन्तो जाताः । अस्मिन्मन्त्रे षष्ठ्य-न्तज्योतिषा पञ्चसंख्यापूरणे नात्मज्योतिषा एकस्याधारत्वाधेयत्वाऽयोगा-दिति* ॥

**कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १४ ॥** ३०० । ०

**अकाण्डे**ऽनवसरे । **भविता** भविष्यति । मानान्तरविरोधपरि-हारो द्वितीयाध्यायार्थः । श्रुतीनामितरेतरविरोधपरिहारस्तु नानाशाखाग-तपूर्वापरवाक्यपर्यालोचनया नानाशाखानामन्योन्यवाक्यानां चेतरेतरविरोध-परिहारेणाद्वितीयब्रह्मप्रतिपत्तिसिद्ध्या समन्वयसिद्ध्यर्थत्वादिह सङ्गत इत्याह **नानेति** । नाना भिन्ना एका चेति तथोक्ता । यदि मानान्तराविरोधो द्विती-याध्यायार्थस्तर्हि वियत्पादादौ कथं श्रुतीनामितरेतराऽविरोधचिन्ता इत्यत आह **प्रासङ्गिकं त्विति** । विप्रतिषेधात् परपक्षाणामनपेक्ष्यत्वे उक्ते स्वप-क्षस्यापि तत्प्रसङ्गे तन्निवृत्तिः प्रयोजनं तत्रैव प्रतिपादयिष्यत इत्यर्थः ।

परैरुद्भाविता दोष उद्धर्तव्यः स्वदर्शने ।
इति शिष्यार्थमत्यर्थचिन्तां तत्राकरोन्मुनिः ॥

क्वाचित्कस्याऽसच्छब्दस्य कर्मकर्तृप्रयोगस्य चासद्वादपरत्वं स्वभाव-वाद‡परत्वं च श्रुतस्य गतिसामान्यव्यवस्थापनात्पादसङ्गतिः । अथ वा एतदारभ्य चौण्यधिकरणानि पादान्तरसङ्गतान्यपि अवान्तरसङ्गतिसाम्यादिह लिखितानि । प्रकृतिश्चेत्यस्य व्याख्यायावसाने तत्र निमित्तं वक्ष्यते । एतेने-त्यस्यापि सर्वन्यायातिदेशत्वादध्यायावसान एव निवेशः । जगत्कारणवादि-वाक्यानि ब्रह्मणि प्रमाणं न वेति विप्रतिपत्तौ विशये पूर्वत्राऽन्नज्योतिषोर्वि-कल्पेनोपास्तौ निवेशादविरोध उक्तः । इह तु सिद्धे कारणे क्रमान्यायोगाद्वि-रोधे सत्यप्रामाण्यमिति पूर्वपक्षमाह **वाक्यानामिति** । वाक्यानां कार्ये ३०१ । २ विरोधात्कार्यद्वारगम्ये जगद्योनौ न समन्वयः वेदान्तानां कारणे विगानात् तदुपलक्ष्ये परमात्मनि च न सिध्यतीत्यर्थः । विभिन्नक्रमा अक्रमा च

* अत्र तृतीयं संख्योपसंग्रहाधिकरणं ( भाष्याधिकरणं ३ पा ) पूर्णम् । तत्र सूत्राणि ३ न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ११ प्राणादयो वाक्यशेषात् १२ ज्योतिषैकेषामसत्यन्ने १३ ॥

† ब्र० स्० अ० २ पा० ३ ।

‡ वादेति नास्ति १ पु० ।

§ छा० म० अ० ६ पा० ७ सू० २३ ।

परात्मनीति २-३ पु० पा० ।

युगपद्भाविनी या* उत्पत्तिस्तत्प्रतिपादकानामित्यर्थः । आत्मन आकाशस्ते-तेजो ऽसृजतेत्यत्र भिन्नः क्रमः । स इमाँल्लोकानसृजतेत्यक्रम इति । तन्नामरूपाभ्यां व्याक्रियतेत्यादीनि कर्मकर्त्रभिधानात्स्वयंकर्तृकत्वशंसी-

३०१ । ८ नीति । ननु कार्यविगाने ब्रह्मणि किमायातमत आह **सृष्ट्या चेति ।** धूमधूलिसंदेहे तद्गम्याग्निसंदेहवद् गमककार्यसंदेहाद् गम्यब्रह्मसंदेह इत्यर्थः । कार्यविगानमभ्युपेत्याह **सर्गेति ।** स्वयंकर्तृकत्वाऽन्यकर्तृकत्वाभ्यां सर्गे क्रमाऽक्रमव्युत्क्रमैस्तत्क्रमे च विवादे ऽपि स्रष्टरि स विवादो न विद्यते सर्गस्य चाविवक्षितत्वात्तद्विवादो ऽकिञ्चित्कर इत्यर्थः । कारणविगानं परि-हरति **सतस्त्विति ।** असद्वा इदमग्र आसीदित्यादौ असद्वचो भक्त्या । अन-भिव्यक्तिश्च भक्तिः । तद्धैक आहुरित्यत्र निराकरणीयत्वेनानुवादो ऽसद्वच इत्यर्थः । अपिशब्दात्सर्गे क्रमे च न विवाद इति सूचितम् । तत्प्रकटयति **न तावदित्यादिना ।** तत्र विभिन्नक्रमत्वं तावत्परिहरति **अनेकशिल्पे-ति । पर्यवदातः** कुशलः । संयवनं मिश्रणं घृतपूर्णपक्वान्नविशेषः । क्रमेण नानाकार्याणि कुर्वाणो देवदत्तः प्रथमस्यैव चरमस्यापि तेन साक्षात्सृष्टत्वा-त्ततो निष्पत्तिर्वक्तुं शक्या† । तथा पूर्वकार्यस्योत्तरकार्यनिमित्तत्वात्कार्यात्का-र्यान्तरसर्गश्च शक्यवचनः । दृष्टान्तमुक्त्वा यत्र ब्रह्मैक्यादाकाशादेर्वाय्वादेश्च-द्यनन्त्यमिति दार्ष्टान्तिकमाह **तथेहापीति ।** अनलाऽनिलात्तेजसः प्राथ-म्यनिर्देशस्तत्प्राथम्यघटनस्य प्रस्तुतत्वात् । तर्हि कदा निर्देशविरोधस्तत्राह **यदि त्विति ।** आकाशवायुतेजसां क्रमेणोत्पत्तिमुक्त्वा व्युत्क्रमाभिधाने हि विरोधः स्यान्न तु तेजसः साक्षाद् ब्रह्मणः सृष्टिमात्राभिधाने । न ह्यनेन क्रमो बाध्यत इत्यर्थः । एवमपिशब्दस्य भावमुक्त्वा न स स्रष्टरीति श्लोकभागं व्याचष्ट **अभ्युपेत्येति ।** यद्वापि धूमसन्देहेन दहनसन्देह-

३०२ । १८ वत्सृष्टिसन्देह इति तदनुवादपनुदति **न च सृष्टिविगानमिति ।** सत्या-दिलक्षणं ब्रह्मावगमय्य तदानन्त्योपपिपादयिषया जगतस्तत्रारोपः श्रुत्या सृष्टिरुच्यते न तु सृष्टौ तात्पर्यमतो मिथ्याभूतायां सृष्टौ विगानं न दोषो ऽपि त्वलङ्कार इत्यर्थः । ननु सृष्टेः कुत आत्मपरमित्यर्थता विपरीतता कस्मान्न स्यादत आह **तज्ज्ञानं चेति । तदनुगुणतयेति ।** व्याख्यातं च

* या इति नास्ति २-३ पु । † शक्यत इति २-३ पु पा. ।

घृतपूर्णटीकायामित्यर्थः । सतस्त्वसद्वचो भक्त्येति श्लोकभागं व्याचष्टे यच्च **कारणइत्यादिना** । तदप्येष इत्यादिः परिहारः । अस्ति ब्रह्मेति चेद्वेदेति ३०३ । ६ प्रकृतं ब्रह्म तच्छब्दसमानार्थेनच्छब्देन परामृश्य श्लोकेनासदभिधाने श्लोकवाक्यमसम्बद्धं स्यादित्यर्थः । श्रुत्यन्तरं सदेव सोम्येत्यादि । मानान्तर विमतं सज्जन्यं कार्यत्वात् कुम्भवदित्यादि । निराकार्यतया क्वचिदिति श्लोकभागं विभजते **तद्धैकइति** । यदा कार्ये विगानमुपेत्य कारणे तदभाव उच्यते तदा समुच्चयाभावाच्चकारस्तुशब्दसमानार्थतया समन्वयो न सिध्यति परात्मनीत्येवंरूपपूर्वपक्षनिषेधार्थ इत्यर्थः । कारणत्वइति सप्तमीमादाय सूत्रैकदेशेन वाक्यानां कारणे परस्परविरोध इति पूर्वपक्षोक्तहेतोरसिद्ध्-रविगानप्रतिज्ञयोच्यतइत्याह **आकाशादिष्वित्यादिना** । प्रतिज्ञाताविगा-नाभावे हेतुपरं सूत्रावयवं व्याचष्टे **कुत इति** । पुनरावृत्त्या कारणत्वेनेति तृतीयान्तमित्थंभावार्थं विवक्षित्वा यथाव्यपदिष्टपदार्थविवरणपरत्वेन व्या-ख्याति **केनेति** । एवं कारणाविगाननिषेधपरत्वेन सूत्रं व्याख्याय सम्प्रति कार्य ॥ । ५५ विगानपरिहारपरतया योजयति **अपर इति** । कल्पः प्रकारः । अस्यां व्याख्यायां चकारः समुच्चये । **तदुक्तं न सृष्टावपीति** । कारणत्वेन विगानं न च कार्यक्रमे इति सूत्रं द्वे प्रतिज्ञे । आद्या प्रागुपपादिता द्वितीयायां हेतुं योजयति **यथाव्यपदिष्ट इति** । यथाशब्दो ऽनतिक्रमार्थः । ब्रह्म-णस्तेजःसृष्टिमात्रमुक्तं न क्रमो भग्न इत्यर्थः । परस्य कार्यान्तरव्यवधानम-न्तरेण तेजसो ब्रह्मप्रभवत्वाभिधानात् प्रथमोत्पत्तिरभिप्रेता ऽत क्रमभङ्गा-द्यथाव्यपदिष्टोक्तिरसिद्धेति शङ्कते **नन्वेकत्रेति** । सिद्धान्ती तु साक्षाद् ब्रह्म-सृज्यत्व*मव्यवधाननिर्देशस्य प्रयोजनं न तु कार्यान्तरस्यासत्त्वमिति मन्वानः पूर्ववदावृत्त्या तृतीयान्ततामादाय[1] सावान्तर व्याख्याकृत्य सूत्रावयवव्या-ख्यया परिहरति **अत आहेति** । पूर्वपक्षमात्रे व्याख्यातत्वात्तदप्रमापनु-त्त्यर्थमाह **हेतावित्ति** । **अधस्तात्** घृतपूर्णटीकायाम । नामरूपाभ्यां व्या-क्रियतेति कर्मकर्तरि कर्मणि वा लकारः । आद्ये कर्तृप्रतिज्ञपक्षस्य हेतुमाह **न हीति** । लूयते केदारः स्वयमेवेति सिद्धकर्तृकमेव सौकर्यापेक्षया कर्मकर्तृ ३२४ । ५ इत्युच्यते इत्यर्थः । द्वितीये स्फुटैवान्यकर्तृपक्षेत्यर्थः । इदमसद्वा-

* सृष्टत्वमिति ८-३ पु पा । [1] तृतीयान्तमादायेति ८-३ पु पा ।

व्यक्तमासीत् तदाद्यात्मना आसीत् तत्कारणपदार्थक्रियोन्मुखम् आसीत् । कार्यरूपेण च समभवत् । ततश्च कारणविषये एकआहुस्तेषां मतं दूषयति कुतस्त्विति । तदेवाह कथमिति । व्यतिरेकमुक्त्वा ऽन्वयमाह सदेवेति[*] । इदं जगत् तर्हि तदानीम् । अव्याकृतं कारणमासीत् । ह किल तत्कारणं शब्दार्थात्मना व्याक्रियत व्यक्तमभवत् । भाष्ये तद्विषयेण कामयितृत्ववचनेनेति सो ऽकामयतेत्यनेनेत्यर्थः । अपरप्रेष्यत्वमिदं सर्वमसृजतेति स्यातन्त्र्यम् । तस्माद्वा एतस्मादात्मन इति तद्विषय आत्मशब्दः । संप्रदायविदां वचने अन्यथा अन्यथेति वीप्सा द्रष्टव्या । लोहं सुवर्णम् । अवतारणाय ब्रह्मात्मैक्यबुद्धेरिति शेषः । प्रतिपाद्ये ब्रह्मणि नास्ति भेदो न विगानमित्यर्थः । मृत्युमत्येतीत्यन्वयः । असद् ब्रह्मेति वेद चेदसाधुः स्यात् । पश्यन्नात्मा दृष्टा उपलभत इति चक्षुः शृणोति मनुत इति च श्रोत्रादयाख्यो भवति[†] ॥

३०४ । ४　　　　**जगद्वाचित्वात् ॥ १६ ॥**

अत्र क्वचित्कहैरण्यगर्भमतद्योतककर्मशब्दस्य ब्रह्मानुगुणत्य[‡]वर्णनात्पादसंगतिः । इहोपक्रमानुरोधाद् ब्रह्म भाति उपसंहारानुरोधेन जीवः । ब्रह्मशब्दश्च स ब्रह्म त्यदित्याचक्षत इति प्राणे ऽपि प्रयुक्त इति संशयः । एकवाक्ये त्यच्छब्दादसच्छब्दो नीयतां वाक्यभेदे तु न ब्रह्मशब्दात्कर्मशब्दो नेय इति सङ्गतिः । यदा खल्वत्राप्येकवाक्यत्वं तदा यथोत्तरसच्छब्दानुसारेण प्राचीनो ऽसच्छब्दो नीत एवमुत्तरस्मात्कर्मशब्दात्प्राचो ब्रह्मशब्दस्य नयनमिति सङ्गतिः प्रातर्दनविचारेण गतत्व शङ्कते नन्विति । तत्र ह्युपक्रमोपसंहारैकरूप्यादेकवाक्यत्वे सति जीवप्राणलिङ्गयोर्ब्रह्मपरतया नयनं कृतं तदिहापि सममित्यर्थः । मध्ये ऽपि ब्रह्मपरामर्शमाह आदित्येति । पुरुषकर्तृत्वस्य ब्रह्मणो ऽन्यथासंभवादित्यन्वयः । अवच्छेदके प्रकरणादावसति सर्वनाम्ना प्रमाणमात्रसिद्धजगतः परामर्शे सति यज्जगत्कर्तृत्वमवगतं तस्य च ब्रह्मणो ऽन्यथासंभवादित्यर्थः ।

---

[*] सत्त्वेवेति १-४ पु पा० ।

[†] अत्र चतुर्थं कारणत्वाधिकरणं पूर्णम् । तत्र सूत्रे २-कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः १४ समाकर्षात् १५ ॥

[‡] अनुगुणत्वेति २-३ पु पा० ।

ब्रा० सू० अ० १ पा० १ सू० २८

जगत्कर्तृत्वमन्यत्र ब्रह्मणो नेति दुष्यति ।
वाचस्पतावुपालम्भमनालोच्योचिरे परे ॥
जीवाज्जन्ये जगत्सर्वं सकारणमिति ब्रुवन् ।
विपन् समन्वयं जीवे न लेभे वाचस्पतिः कथम् ॥ इति ।

अधिष्ठानं हि ब्रह्म न जीवाः । अधिष्ठाने च समन्वय इत्यनवद्यम् । इह वाक्यभेदापादनेन तावद्गतार्थतामाह उच्यत इत्यादिना । अत्र ३०४ । ११ बालाकिवाक्याद् ब्रह्म मन्यते सिद्धान्ती राजवाक्याद्वा । नाद्य इत्याह ब्रह्म ते इति । न द्वितीय इत्याह यस्य चेति । ननु बालाकिवाक्यगत-ब्रह्मप्रतिज्ञया राजवाक्यं ब्रह्मपरमस्त्वग्निवाक्यादिवाचार्यवाक्यमित्याश-ङ्क्याह न चेति । तत्र हि वक्तृभेदे ऽप्येकवाक्यताग्निभिर्द्दर्शिता ऽऽचार्यस्तु ते गतिं वक्तेति इह तु तदभावाद्वाक्यभेद इत्यर्थः । ननु बालाकिवचने ब्रह्मशब्दस्य का गतिः अत आह तस्मादिति । राजवाक्यार्थ एव ग्राह्यः राद्धान्तत्वात् । भ्रान्त*गार्ग्योक्तिस्तु पूर्वपक्षत्वादसद्वादवदग्राह्यार्थ । ननु राजवाक्ये ऽपि क्रियमाणसर्वजगत् प्रति कर्तव्यत्वं ब्रह्मलिङ्गं गम्यते ऽत आह अत्र चेति । ब्रह्मकार्ये जगति योगसम्भवमङ्गीकृत्य कृत्वा ऽपहारमुक्त्वा योगाऽसम्भवमाह न च ब्रह्मण इति । उदासीनस्योत्पत्त्यसम्बन्धोक्ता । व्यापा-कृत्यभावाज्जगतस्तत्कृतत्वायोग इत्यर्थः । ब्रह्मणो यदि न व्यापारवत्ता कस्य तर्हि । ननु प्राणस्यास्तु । ननु सो ऽपि कथं वेदितव्यतयोच्यते प्रसि-द्धत्वादित्याशङ्क्य तस्य हिरण्यगर्भरूपेण वेद्यत्वोपपत्तेः वाक्यशेषस्य प्राणपरत्वात् कर्मशब्दस्य रूढार्थलाभाच्च प्राण एव कर्मसम्बन्धीत्याह वाक्यशेषे चेति । त्रयस्त्रिंशदादिदेवानां कारणभूत एको देवः कतम इति पृष्टे प्राण इत्युक्तत्वात्-द्धिरण्यगर्भात्मकप्राणकार्यत्वमादित्यादेरित्यर्थः । पाप्मसु भूतेषु चापेक्षितक-वृत्तिः सङ्कुचितवृत्तिः सर्वशब्दः । सङ्कोचमेवाह यद्वेतिति । सम्प्रति विप्रतिपत्तिवचनयोरैकत्वमुपेत्यापि पूर्वपक्षसम्भवमाह यदि त्विति । यद्यपि ३०५ । ८ गार्ग्यो भ्रान्तस्तथापि न भ्रान्तो ब्रह्मोपक्रमः । सहस्रमेतस्यां वाचि दद्म इति ब्रह्मप्रतिज्ञायां राज्ञा गोसहस्रस्य दत्तत्वात् । अत उपक्रान्तं ब्रह्मैव गार्ग्यं प्रति विशेषतो निरूप्यमिति यदि मन्येतानारम्भवादी तथापि

* भ्रान्तेति नास्ति २ पु ।    † संकोचमेवाहेति २ पु पा० ।

नैतत्पर*ब्रह्माभिधानम् । उपसंहारे जीवनिर्णयादित्यर्थः । **उपेतं** शिष्यभा-
वेन गतम् । प्राणो हि सुषुप्तौ व्याप्रियते स चेतनश्चेद् बृहत्पाण्डरवास
इत्यादि स्वनाम जानीयाद् न च जज्ञिवा†नतः सुप्तस्य यष्टिघातेनोत्थाप-
नात्‡ प्राणादिव्यतिरिक्तं बोधयतीत्यर्थः । उपसंहारोऽपि जीवपर इत्याह

३०५ । १५ **परस्तादपीति** । ननु जीवस्यापि सर्वगतस्य निरवयवस्य परिस्पन्दप-
रिणामयोरसम्भवात् कथं यस्य वैतत्कर्मेति निर्देशस्तत्राह **यस्य वैत-
दिति** । जीवप्रेर्यदेहादिसम्बन्धिकर्मषष्ठ्या जीवसम्बन्धित्वेन उपचर्यत
इत्यर्थः । साक्षाज्जीवसम्बन्धिधर्मादौ कर्मशब्दो लाक्षणिक इत्याह **कर्म-
जन्यत्वाद्वेति** । ननु योगवृत्त्या जगदभिधीयतां नेत्याह **रूढ्यनुसारा-
दिति** । रूढ्यर्थं गृहीत्वा तदविनाभूतलक्षणादित्यर्थः । अग्रहे हि न
तत्संबन्धिनि लक्षणा । यद्यपि ब्रह्मशब्दाऽश्रवणात्स्पष्टं ब्रह्माभिधानं नोपल-
भ्यते तथापि प्रश्नप्रतिवचनयोः क्वैष इति प्राणे एवैकधा§ भवतीति च
सप्तमीप्रथमाभ्यां जीवप्राणयोर्भेदो गम्यते|| ऽत आह **जीवव्यतिरेकश्चेति** ।
जीवातिरिक्तहिरण्यगर्भस्य प्राणत्वान्न ब्रह्मसिद्धिरित्यस्माकमिष्टसिद्धिरित्यर्थः ।

३०६ । ४३ **मृषेति** । आदित्यादीनब्रह्मणो ब्रह्मेति मृषावादिनं बालाकिं मृषा वै खलु
मा संवदिष्ठा इत्यपोद्य निरस्य सत्यं ब्रह्माभिधित्सन् राजा यदि स्वरूपेण
जीवं प्राणं वा ब्रूयात् ततोऽसंबद्धवादी स्याद्यदि जीवादि ब्रह्मत्वेन वदेत्
ततो मिथ्या वदेत् तच्चानुपपन्नं तस्माद् ब्रह्मैव वदतीत्यर्थः । काच इन्द्रनीलम-
मानवर्णो मृत् । **मिथ्यावदं** मिथ्यावदनम् । एवं च भिन्नवक्तृकवाक्यद्वयस्यापि
भ्रमप्रसक्तिस्तन्निरासपरतयैकवाक्यत्वाद् ब्रह्मोपक्रमः सिद्धः सिद्धं चास्योपसंहा-
रेण सङ्गानमिति ब्रह्मपरत्वं सर्वस्य संदर्भस्येत्याह **तस्माद् ब्रह्म त इति** ।
हेतुना ब्रह्मपरत्वं निश्चीयत इत्युपरितनप्रतिज्ञयैवान्वयः सर्वश्रुतेरसङ्कोचे निर-
तिशयफलेनोपसंहारो हेतुः । यदवादि व्यतिरेकनिर्देशो हिरण्यगर्भे स्यादिति

३०७ । ९ तत्राह **क्वैष इति** । हे बालाके एष पुरुषः क्वैतदशयिष्ट एतदिति क्रियाविशेष-
णम् । इत्थमित्यर्थः । एष जीवाश्रयप्रश्नः । क्व वा एतदभूदिति भवनप्रश्नः ।
भवनं तादात्म्येन वर्तनम् । शयनमसंबोधः । कुत एतदागादित्यपादान-

* नैतस्य परेत्यादिः पाठः २-३ पु० । † जातवानिति २-३ पु० पा० ।
‡ नोत्थानादिति २-३ पु० पा० । § एकंकधेति ३ पु० पा० ।
|| भवगम्यत इति २ पु० पा० । गम्यत इति १ पु० पा० ।

प्रश्नः । प्राण एवैकधा भवतीति भवनप्रश्नोत्तरम् । आदिशब्दात्तदैनं वाक्स-
र्वैर्नामभिः सहाप्येति इत्यादि शयनप्रश्नोत्तरम् । यथाऽग्नेः क्षुद्रा विस्फु-
लिङ्गा व्युच्चरन्त्येवमेवास्मात्सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते इत्यादेः क्रमया-
नप्रश्नोत्तरं च द्रष्टव्यम् । एतानि च न हिरण्यगर्भे संभवन्ति जीवस्य जीवा-
न्तरात्मत्वाऽयोगादित्यर्थः । प्रश्नस्योत्तरस्येति चैकवचनं बहुष्वेव जात्यपेक्षम् ।
न केवलमनुपपत्त्या प्रश्नोत्तरयोर्ब्रह्मार्थत्वमपि त्वात्मशब्दादपीति वक्तुं पृच्छ-
ति अथ कस्मादिति । निर्णीतार्थवाक्ये रूढिर्बाध्येत्याह तदेवमिति । ३०१ । १८
व्यापाराभिधाने सतीत्यर्थः । ननु तथापि सर्वकर्तृत्वे सिद्धे आदित्यादिक-
र्तृत्वं पुनरुक्तमत आह एतदुक्तमिति । न तावद्व्यापकोक्तिरेकदेशोक्त्या
पुनरुक्ता भवेत् नाप्येकदेशोक्तिर्व्यापकोक्त्याऽऽदित्यादेरन्यत्राविशेषोक्तेरस्तु
सङ्कोच इति बालाकिभ्रमापोहार्थत्वादित्यर्थः । कथं तर्हि ब्रह्मपरे वाक्ये
जीववाची पुरुषशब्दः प्राणशब्दश्चात आह जीवेति । प्राणयतीति योगाद्ब्र-
ह्मवमनास्पदं* ब्रह्म प्राणशब्दो वक्ति । जीववाची तु पुरुषशब्दो जीवस्यापि
स्थानभूतब्रह्मलक्षणार्थ इत्यर्थः । ब्रह्मभावापेक्षया ब्रह्मशब्देन जीवोपलक्षणे
ब्रह्मशब्दोपक्रमो मृषावादिबालाक्युपवादो विश्वकर्तृत्वं चासमञ्जसमित्यर्थः ।
प्रत्यक्षत्वाज्जीवस्य न प्रतिपाद्यताऽपीत्याह न चानधिगतेति । स्वरसः
स्वभावः । ब्रह्मणा लोकाऽनधिगतेनाऽधिगतजीवोपलक्षणं चानुपपन्नमित्यर्थः ।
ननु किं जीवस्य ब्रह्मोपलक्षकत्वेन प्रसिद्धावपि जीवप्राणावृत्त्या नामादिव-
दुपास्तिर्विधीयतामिति शङ्कां निराकुर्वन् जीवमुख्येति सूत्रं व्याचष्टे न च
संभवत्येकवाक्यत्वमित्यादिना । तत्र प्रसङ्गागत जीवमुख्येति सूत्र-
व्याख्यायाऽधिकरणाद्यसूत्रव्याख्यामेवानुसरति स्यादेतदित्यादिना । एषां च
यस्य चैतत्कर्मेत्येतच्छब्देन नाऽऽदित्यादिपुरुषाणां परामर्शः येषां पुरुषाणां
कर्तेत्यनेन पुनरुक्तिरित्युक्तम् । तत्र पूर्ववादिनः पुनरुक्तिपरिहारमाशङ्क्य भाष्य-
व्याख्यया परिहरति निर्दिश्यन्तामित्यादिना । कृतिरत्र निर्दिष्टेति । ३०८ । १६
यद्यपि कर्तेति शब्दे कृतिरपि भाति तथापि प्राधान्यतोऽनिर्दिष्टेत्यर्थः ।
कार्योत्पत्तिः कर्तृव्यापारस्य साध्यतया फलम् । भाष्ये उपात्तस्य नाभिधेयत्वं
किं त्वनुपपत्तिगम्यत्वं तदेव दर्शयति न हीति । शब्दोक्तपुरुषाणाम् एत-

* सत्तावद्गमिति १ पृ पा । † व्यासम् अ १ पा १ सू ३१ ।

च्छब्दापरामर्शेन अर्थसंनिधिना जगन्मात्रपरामर्शे स्वेनैव कृतप्रतिवचनमपि
८।२० पौनरुक्त्यचोद्यम्। भाष्ये क्रमप्राप्तं व्याचष्टे **ननु यदीति**। इदानीमन्यार्थं तु
जैमिनि*रिति सूत्रस्थभाष्याणि व्याचष्टे **ननु प्राण एवेत्यादिना**। प्राणश-
ब्दो हिरण्यगर्भं वक्ति कुतो ब्रह्मप्रतीतिरिति शङ्कार्थः। आत्मशब्दाद्ब्रह्मैव
इति परिहारः। एतस्मादिति वाक्योदाहृतेरेव वेदान्तार्थत्वसिद्धेरुत्तरभा-
ष्यवैयर्थ्यमाशङ्क्य सर्ववेदान्तानुगतिस्तेन दर्श्यतइत्याह **अपि चेति**। भ्रम-
संस्कारे सत्यपि प्रादुर्भूतभ्रमाभावात् मुक्त्योपमाने सुषुप्ते रूपशब्देन भाष्ये
कृतमित्यर्थः। **विभजते** उपाधिजनितविशेषेत्यादिभाष्येणेति शेषः। तद्व्या-
चष्टे **उपाधिभिरिति**। ननु विज्ञानमित्येवास्तु किं विशेषेति विशेषणेनात
आह **यदिति**। एतद्विशेषणाऽविशिष्टं विज्ञानं यत्तदनवच्छिन्नं सद्रूपं ब्रह्मैव
स्यात्तच्च नित्यमिति कृत्वा नोपाधिजनितम्। नापि तेन ब्रह्मरूपेण रहित
मात्मनः स्वरूपमतो विशेषपदेन ब्रह्म व्यवच्छेद्यम्। राहित्याभावे हेतु-
माह **ब्रह्मस्वभावस्याऽप्रहाणादिति**। यतस्तद्भ्रंशरूपमागमनमिति भाष्यं
व्याचक्षाणः सुषुप्तौ ब्रह्मभाव दृढीकर्तुं तद्व्यतिरेके समारमाह **यदा त्विति**।
ननु हिताऽहितफलप्रदा नाम नाड्यो द्वासप्ततिसहस्राणि ताभिः प्रत्यवसृप्य
पुरीतति शेतइत्यत्र पुरीतदाख्या ऽऽत्माधार उक्तः एवमाकाशः किं न स्या-
दत आह **यद्यपीति**। **मन्दधियामिति**। जीवनिरासहेतुप्रश्नोत्तराभ्यामस्थि
तयोर्पृथगुपादानादिः सूत्रे ऽर्थात्मवचनाऽज्ञानाद्बुद्धिमान्द्यम्। भाष्योक्तप्राणादिव्यतिरि-
३१२।३ क्तोपदेशं दर्शयति **तौ हेति**।

महत्त्वात् हे बृहत् पाण्डुरा आपो वासस्त्वेनास्य चिन्त्यन्तइति तथो-
क्तः। प्राणस्यैव चन्द्रात्मत्वात्सोमराजत्वम् अर्थतस्य प्राणस्यापः शरीरं
ज्योतीरूपमसौ चन्द्र इति श्रुतेः। आपिषम्। आपिष्यापिष्य। यत्र
सुप्तस्तत्स्थानं किमिति प्रश्नः। यदा पुरुषः स्वपिति अथ तदा प्राणे
एकीभवति प्राणः सर्वदेवानामात्मत्वेन महत्त्वाद् ब्रह्म तच्च ब्रह्म त्यदिति
परोक्षेणाचक्षते परोक्षप्रियत्वाद्देवानाम्। अस्माद् ब्रह्मशब्दात् पूर्वपक्षे
ब्रह्मोपक्रमः प्राणे घटितः। सर्वेषां श्रैष्ठ्यं गुणोत्कर्षम् आधिपत्यमैश्वर्यं

* व्या० सू० अ० १ पा० ४ सू० १८।

स्वाराज्यम् अनन्याधीनत्वम् । मनो मनउपाधिको जीवः । प्राणबन्धनः प्राणाश्रयः* ॥

## वाक्यान्वयात् ॥ १९ ॥

३१० । ९

अथ जीवब्रह्मलिङ्गाभ्यां विशयः पूर्वत्र ब्रह्मोपक्रमात् तत्परत्ववदिहापि जीवोपक्रमात्तत्परतेति सङ्गतिः । क्वचित्समन्वयस्य जीवमात्रपर्यवसाननिषेधात्पादसङ्गतिः । मैत्रेयीब्राह्मणार्थमनुक्रामन् प्रातर्दनन्यायेन आमितामाशङ्कते **नन्वित्यादिना** । यियासता गन्तुमिच्छता । कात्यायन्या द्वितीयभार्यया । यद्यपि भगोः भगवन् तेनामृता किं स्यामिति प्रश्नः । उपकरणवतामशनवसनादिमतां यद्रूपस्य वित्तस्यामृतत्वसाधनभावाप्राप्तेः प्रतिषेधायोगमाशङ्क्य तत्साध्यकर्मद्वारा प्राप्तिमुपपादयति **एवमिति** । श्रुतौ तच्छब्दार्थमाह **अमृतत्वेति** । अमृतत्वसाधनज्ञानोपन्यासाय वैराग्यमुत्पादयितुं वाक्यसन्दर्भमुवाचेत्यन्वयः । वाक्यसन्दर्भं व्याख्याति **आत्मनीति** । आत्मा वा अरे इति कृतसन्धिको वैशब्दो ऽनुस्वाराद्वाशब्द उक्तः । **विहितानि** विधिवद्भिर्निगदैर्बोधितानीत्यर्थः । **कस्मा**दित्यत्र द्रष्टव्य इत्यनुषङ्गः । श्रवणादीनि साधनानि यस्य तत्तथोक्तम् । आत्मनो वेत्यादिवाक्यं विदितमित्यस्यानन्तरं भवतीति शेषः । द्रष्टव्य इत्यर्थः । मतिर्मननं विज्ञानं निदिध्यासनम् । श्रवणादिना यद्दर्शनं तेनेत्यर्थः । आत्मदर्शनफलमुक्त्वा ऽनात्मदृष्टौ दोषदर्शकं वाक्यमवतारयति **कुत इति** । ब्राह्मणत्वाद्यभिमानो नियोज्यत्वाविर्भावनेनात्मतत्त्वात् भ्रंशयेदित्यर्थः । स यथा दुन्दुभेर्हन्यमानस्य न बाह्यान् शब्दान् शक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीत इत्यादिश्रुतिसूचितमनुमानं विशदयति **यत्स्वल्विति** । ३११ । १० स दृष्टान्तो यथा लोके दुन्दुभेर्हन्यमानस्य लक्षणाय हन्यमानदुन्दुभ्यभिव्यक्तशब्दत्वसामान्यस्य विशेषभूतात् सामान्याद्ग्राह्यत्वेन ग्रहीतुं न शक्नुयादिति व्यतिरेकः एवमन्वयो ऽपि दुन्दुभिशब्दस्य तु ग्रहणेन तद्विशेषशब्दो दुन्दुभ्याघातसंज्ञको गृहीत आघातस्य वा ग्रहणेन तदवान्तरविशेषशब्दो

* अत्र पञ्चमं जगद्वाचित्वाधिकरणं बालाक्यधिकरणं वा । सूत्रम् । तत्र सूत्राणि ३—जगद्वाचित्वात् १६ जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् १७ अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १८ ॥ † दर्शनं साक्षादिति २ पु० पा० ।

‡ स इति नास्ति २-३ पु० । § शब्दत्वसामान्येति २-३ पु० पा० ।

३१२ । ९ गृहीत इति श्रुत्यर्थः । आर्द्रैरेधोभिरिद्ध आर्द्रैधाः । अभ्याहित उपचितः । पञ्चम्यर्थे षष्ठी । धूमग्रहणं विस्फुलिङ्गाद्युपलक्षणार्थम् । किं तन्निःश्वसितं तदाह श्रुतिः । यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानीति । अथर्वाङ्गिरसोन्तश्चतुर्विधो मन्त्रः । इतिहास उर्वशी हाप्सराः पुरूरवसमैलं चकमे इत्यादि । पुराणं सदेव सोम्येदमग्रआसीदित्यादि सर्गादिकथकम् । विद्या देवयजनविद्याद्याः । उपनिषदः प्रियमित्येतदुपासीतेत्याद्या रहस्योपासनाः । श्लोकाः ब्राह्मणप्रभवा मन्त्रास्तदेते श्लोका इत्यादौ निर्दिष्टाः । सूत्राण्यात्मेत्येवोपासीतेत्यादिवस्तुसंग्रहवाक्यानि । अनुव्याख्यानानि संग्रहविवरणानि । व्याख्यानानि मन्त्रव्याख्याः । इत्यष्टविधं ब्राह्मणमित्यर्थः* । श्रुतौ शब्दसृष्ट्यर्थादर्थसृष्टिरुक्तेति वदन्नामरूपप्रपञ्चकारणतां† व्याचक्षाण इति भाष्याभिप्रायमाह यदा चेति । सिद्धान्त एव प्रकट इति गतार्थत्वं शङ्कते‡ ऽतः शङ्कावसरेऽपि युक्ता सिद्धान्तभाष्यव्याख्या । स यथा सैन्धवखिल्य इति

,, । १९ वाक्येन ज्ञाननिमित्त आत्यन्तिकः प्रलयः प्रपञ्चस्योक्तस्तमाह यथा सामुद्रमिति । खिल्यो घनः । आत्यन्तिकप्रलये प्राकृतो लयो दृष्टान्तत्वेनोच्यत इत्याह एतदिति । समुद्रेऽपां लयः प्राकृतलये दृष्टान्तो न त्वात्यन्तिकलये । सर्वेषां स्पर्शानां त्वगेकायनमित्यादिदृष्टान्तप्रबन्धस्तत्र हि महाप्रलयसमये त्वगादिशब्दलक्ष्यस्पर्शत्वादिसामान्येषु तद्विशेषाणां तेषां च सामान्यानां क्रमेण ब्रह्मणि लय उच्यते इति एवं वा अरे इदं महदिति श्रुतिं व्याचक्षाण उदाहरति दार्ष्टान्तिक इति । अवच्छेदोऽल्पत्वम् । यत्र हि द्वैतमिव भवति तदितर इतरं पश्यतीति वाक्यं विभजते स होवाचेति । यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन विजानीयादिति वाक्यं विवृणोति आनन्देति । विषयाभावेऽप्यात्मभूतं ब्रह्म जानीयादिति शङ्कापनु-

३१४ । १ त्तये विज्ञातारमरे केन विजानीयादिति वाक्य तद्व्याचष्टे ब्रह्म वेति । येनाहं नामृता स्यामित्यमृतत्वोपक्रमाद् दुन्दुभ्यादिभिस्तदुपपादनात् । ब्रह्म तं परादादित्यादि द्वैतनिन्दा । इदं ब्रह्मेदं क्षत्रमित्यारभ्येदं सर्वं यदयमात्मे-

---

* इत्यर्थ इति नास्ति २-३ पु. । † कारणमिति २-३ पु. पा. ।

‡ शङ्कते इति २-३ पु. पा. ।

त्यन्तमद्वैतगुणकीर्तनम् । अस्तीत्याख्यानप्रतिरूपकमव्ययम् । विद्यमानपूर्वपक्षमित्यर्थः । यद्यपीह जीवब्रह्मलिङ्गसन्देहे सर्वात्मब्रह्मण्यन्तर्भवन्तो जीवधर्मा न ब्रह्मपरतया योज्यन्ते प्रातर्दनाधिकरणे* एव तत्सिद्धेः । नापि प्रसिद्धजीवानुवादेनाऽप्रसिद्धब्रह्मात्मबोधनपरता ऽवधार्यते सुषुप्त्युत्क्रान्त्यधिकरणे† तत्सिद्धेः तथापि जीवमनूद्य ब्रह्मत्वबोधनादनुवाद्यविधेययो-र्भेदाभेदाविति मतनिरासेन ऐकान्तिकमद्वैतं प्रतिपाद्यतइत्याह अत्रोच्यत- इति । मैत्रेयीब्राह्मणविषये जीवमात्रपरत्वपूर्वपक्षेण प्रस्तावमात्रं कृत तत्क- मर्थमत आह भोक्तृत्वेति । भोक्तृत्वादीनां भेदपरत्वेन शङ्क्यमानानां समाधये इत्यर्थः । भोक्तृत्वं विभजते पतीति । आत्मनस्तु कामाय पतिः प्रियो भवति‡ आत्मनस्तु कामाय जाया प्रियेत्यादिसबन्ध इत्यर्थः । ज्ञातृ-तामाह नापीति । विज्ञातारमरे केन विजानीयादिति श्रुतमित्यर्थः । जीव-रूपेण ब्रह्मण उत्थानमुत्पत्तिमाह साक्षाच्चेति । भोक्तृत्वादेरर्थापत्त्या जीव-धर्मैरिह तु ब्रह्मण उत्पत्त्या मुखत एवेति साक्षादुपग्रहणम् । भाष्ये भोक्तृत्वा-द्युपग्यजातस्य जीवज्ञानात् सर्वज्ञानोपचार इति जीवपक्षस्योपबृंहणाभासो दुन्दुभ्यादिभिः सर्वज्ञानोपपादनादुपचाराऽयोगादित्यर्थः । सिद्धान्तभाष्यं गता-र्थत्ववर्णनच्छलेन विवृतमित्यभिप्रेत्याह सिद्धान्तस्त्विति । लिङ्गत्रयस-माधि श्लोकोक्तं दर्शयति तदेवमित्यादिना । पूर्वपक्षमाह आचार्यदे-शीयेति ।

प्रतिज्ञेति॥ । तद्रूपेण वह्निरूपेण निरूपणं यया ते तथा । अत्यन्ताभेदे ब्रह्मवत्परस्परमत्यावृत्तिप्रसङ्गाद् ब्रह्मव्यतिरिक्तजीवाभावे च तस्योपदेशः स्यात् तस्य चायुक्तत्वादित्यर्थः । परमात्मनि दर्शयितव्ये यो विज्ञानात्मनोप-क्रमः स तयोरभेदमादाय । स चाभेदः प्रतिज्ञासिद्धये इति योजना । आश्मरथ्यमतादुत्क्रमिष्यत इति जीवो हीति । उपाधिसंपर्को हेतुः कालुष्ये न जीवपरभेदे सर्वदेत्यनादिकाले भेदहेतोरागमकस्य संसारित्वादेरीश्वराविरुद्ध-धर्मस्येत्यर्थः । वृद्धयेऽपि कद्रूप्या ऽनाद्यणुश्यामतोदाहृता । यथा नद्यः

३१४ । ८

३१५ । १

* छा॰ सू॰ अ॰ १ पा॰ १ सू॰ २८ । † छा॰ सू॰ अ॰ १ पा॰ ३ सू॰ ४४ ।
‡ आत्मन इत्यादिरंतदन्तो ग्रन्थस्त्रुटित. २–३ पु ।
॥ एतस्थाने प्रतिज्ञेति प्रतीकपाठ ३ प ।

स्यन्दमानाः समुद्रे ऽस्तं गच्छन्ति नामरूपे विहायेत्युदाहर्तव्यम् । तद्धि तथा विद्वानित्यस्य पूर्वोढुम् । अर्थसाम्यात् यथा सोम्येमा नद्यः स्यन्दमानाः समुद्रं प्राप्यास्तं गच्छन्तीत्युदाहरत् । अनेन जीवेनात्मनेति सामानाधिकरण्यं ।१८ कार्यकारणभावेन भेदाभेदपरमिति शङ्कते परिहरति **न च तेज इति** । आश्मरथ्यमते कार्यकारणभावस्य वास्तवत्वेनाऽत्यन्तत्वात्कियानपीति भाष्यनिर्देशायोगमाशङ्क्याह **आत्यन्तिके इति** । अभेदे आत्यन्तिके सति विद्यमानइति च्छेदः । आस्थिते कथं चिदभेदे ऽपीषद्भेद आपततीति स कार्यकारणभावनिर्वाहक इति लक्षणया तथोक्त इत्यर्थः । ननूच्छेदाभिधानमेतदिति शेषं भाष्य* न सत्तामात्रं व्यामेधोत्यादिग्रन्थेन व्याख्यातार्थमित्यर्थः । भाष्ये विज्ञातारमिति कर्तृनिर्देशनिद्रु काशकृत्स्नमतेनैव परिहरणीयमित्येवकारस्याभिप्रायमाह **काशकृत्स्नीयेनैवेति** । शङ्कानिराकरणत्वमेव दर्शयति **एकान्तिके हीति** । यत्र त्वस्य सर्वमात्मैवाभूतत् केन कं पश्येदित्यात्मनो ऽन्यकर्मकरणे निषिद्धे सत आत्मानं जानात्विति शङ्कायां स्वप्रकाशं† विज्ञातारं केन विजानीयादिति तत्कर्मत्व प्रतिषिद्धम् । एतानि भेदपक्षे भेदाऽभेदपक्षे च निषेद्धुं न शक्यानि प्रमाणादेः सत्त्वा‡दित्यर्थः । अत्यन्तभिन्नस्य तत्केनेति प्रतिषेधो विज्ञातारमिति व्यावृतत्वेन जीवग्रहणाऽनिषेध इति§ केन विदयुक्तमुक्तम् । आत्मैवाभूदिति भेदाभेदप्रतिषेधात् । यत्र हि द्वैतमिवेति इवकारेण द्वैतवैतथ्योपक्रमाच्च श्रुत्यनुसारिकाशकृत्स्नमतादत्यन्ताद्वैतसिद्धौ जीवस्य ज्ञातृत्वमविद्यावस्थायां भूतं तदालोचनेन तन्निर्देश इत्यर्थात्स्थितम् ।

इदानीं पौरुषेयीं काशकृत्स्नदृष्टिमनपेक्ष्य श्रुतित एव निर्णीयते इत्याह
८।५ **न केवलमिति** । यदि श्रुतिवित्काशकृत्स्न इति तन्मतमादृतं हन्त किं न श्रुतिविद इतरे आचार्या इति शङ्कते **कस्मात्पुनरिति** । पुंगौरवेण श्रुत्यनुमानाद्वरं प्रत्यक्षश्रुतिदृष्टं मतं गृहीतमिति परिहारार्थः । **दर्शितं पुरस्तात्** । यत्र हीत्यादिश्रुतिमत्त्वमित्यर्थः । उक्तश्रुत्युदाहरणभाष्यस्य पौनरुक्त्यमाशङ्क्य बहुवाक्यप्रदर्शकत्वेन परिहरति **श्रुतिप्रबन्धेति** । स्मृतिमत्त्वं च स्मृत्युपन्या-

* भाष्यमिति नास्ति २ पु. ।
† स्वप्रकाशमिति नास्ति २-३ पु. ।
‡ सत्यत्वादिति १ पु. पा. ।
§ पक्षणमितीति २ पु. पा. ।

सेनेति शेषः । भाष्यगत उपसंहार उपक्रमे यस्य तच्छ्रुतिमत्त्वं तथोक्तम् । उपसंहारोक्तिस्तद्द्वारा ऽप्यज्ञामित्वाय । अतश्चेत्याद्यभ्युपगन्तव्य इत्यन्त भाष्यमुपसंहारार्थं ततः परं श्रुतिप्रबन्धोपन्यासाय । अतश्चेति पाठे बहुप्रमाणादृष्टिरवश्यतया सूचिता । भाष्यकारेण स वा एष इति श्रुतिमुदाहृत्य सर्वविक्रियाप्रतिषेधादिति तात्पर्यमभाणि तद्विशदयति **जननेति** । ३१८ । १२ श्रुतावमर इत्यपक्षयप्रतिषेधः । भाष्यस्य युक्तीनामनन्यथासिद्धिमाह **परिणामेति** । अन्यथा निरपवादविज्ञानानुपपत्तेरिति भाष्यं व्याकरोति **अपि चेति** । भेदाऽभेदावविरुद्धावुत विरुद्धौ नाद्य इत्याह **विरोधादिति** । अविरोधश्चेद्भेदे ऽप्यत्यन्ताभेदाविरोधान्न भेदाऽभेदावकाश इति भावः । द्वितीये विषमबलौ समबलौ वा । आद्यमनूद्य प्रत्याह **नात्मनीति** । भाष्ये निरपवादत्वमबाध्यत्वम् । द्वितीयमनुभाष्य दूषयन् सुनिश्चितार्थत्वानुपपत्तेश्चेति भाष्यभावमाह **अथ त्विति** । समबलबाधितविपर्यये* विषये संशयः सत्प्रतिपक्षानुमानवदित्यर्थः ।

> भेदाऽभेदव्यवस्था चेद्धिंसाविधिनिषेधवत् ।
> कार्यकारणयोस्तर्हि नैकत्र स्तो भिदाऽभिदे ॥

यथा ऽग्नीषोमीयहिंसायां विधिर्बाह्यहिंसायां निषेधो नैकत्रैव एवं कारणमेकं कार्याणि नानेति भेदवादी एव स्यात् ।

> सामानाधिकरण्यं यद्धेमकुण्डलयो न तत्‡ ।
> भेदाऽभेदावगाहीति प्राग्वाचस्पतिनेरितम् ॥

भाष्यस्थयुक्त्या भेदाऽभेदौ निरस्तावित्याह **एकत्वमिति** । स्थितप्रज्ञेति भाष्ये स्थितिर्निःसंशयता । लोकप्रसिद्ध्या जीवेश्वरभेदमाह **कथं तर्हीति** । अनुमानादप्याह **कथं चेति** । यद्विरुद्धधर्मवत्तन्नाना दहनतुहिनवत्तया च जीवेशावित्यर्थः । स्वाभाविकं विरुद्धधर्मवत्त्वमसिद्धमौपाधिकं तु बिम्बप्रतिबिम्बयोरनैकान्तिकमिति शङ्कित्वा परिहरति भेदवादी **अविद्ये-त्यादिना** । ३१९ । भाष्यकृद्भिः श्रोताभेदसिद्धौ मृषा भेद इति प्रतिपादितं तदयुक्तम् । भेदाभेदसमभवादित्याशङ्क्याह **न तावद्भेदाऽभेदाविति** । अविद्या-

* विपर्यये इति नास्ति ट-३ पु० । † ... इति ट... पा० ।
‡ हेमकुण्डलयोर्न तदिति पाठः परिमलादवलोकितः । (परि० पृ० १३२)

अयं त्वविद्योपधानं चेत्यादिना वक्ष्याम इति तावच्छब्दः । मा भूत्तामेकत्व-भेदाऽभेदौ भेद एवास्त्वित्याह **द्वैतेति** । लोकप्रसिद्धिमन्यथासिद्धयत्यनु-
९ । १५ मानं चा ऽनैकान्तयति **तत्र यथेत्यादिना** । परस्मिन्नुच्यते प्राचीनैराचार्यैर-विद्या ब्रह्मणीति षड्भिरित्यर्थः । अनादित्वमात्रे बीजाङ्कुरदृष्टान्तो न तु जीवाविद्याव्यक्तिभेदे । उत्पत्तौ हीतरेतराश्रयदोषो ऽनाद्योर्जीवाविद्ययोश्च नोत्पत्तिः । इतरेतराधीनत्वं तु स्यात् । तच्च दृष्टमविद्यातत्संबन्धयोर्वा-च्यवाचकत्वादीनां चेत्यर्थः ।

यदवाह केशवः ।

यद्युपाधिविशिष्टस्य संसारो नाशितात्मनः ।
तद्भावितस्य चेद् ब्रह्म मुक्तौ तद्रूपमुच्यताम् ॥ इति ।

सत्यं । यतो न विशेषणम् अविद्या नाप्युपलक्षणं किं तूपाधिः । कः पुनरेषां भेदः । उच्यते । कार्यान्वयित्वेन विभेदकं हि विशेषणं नैल्यमि-वोत्पलस्य । अनन्वयित्वेन तु भेदकानाम् उपाधिता लक्षणता च सिद्धा । तत्र च ।

यावत्कार्यमवस्थाय भेदहेतोरुपाधिता ।
कादाचित्कतया भेदधीहेतुरुपलक्षणम् ॥

नीलोत्पलमानयेत्यत्र हि नैल्यं व्यावृत्तिप्रयुक्तानयनकार्यान्वयि सदु-त्पलं रक्ताद्व्यावर्तयति । अलक्तककाकौ तु स्फटिकगृहकार्ययोर्नान्वीयेते । अलक्तकं तु यावद्रक्तस्फटिकानयनमनुवर्तते । काकस्तु न चैत्रगृहगमनं यावदनुवर्तते । तदिहाऽविद्या न विशेषणमिति न तन्नाशे जीवनाशः । न चोपलक्षणमिति न ब्रह्मणि संसारो यावत्संसारं चानुवर्तिष्यते । तन्निवृत्तौ च जीवः स्वं ब्रह्मभावमेष्यति । त्वया ऽपि लिङ्गशरीरावच्छेदाभ्युपगमात् समौ पर्यनुयोगपरिहारौ । न चौपाधिकस्य सत्यत्वमित्यनन्तरमेव वक्ष्यत इति ।

० । ९ **अत एवेत्येतद्विवृणोति न खल्विति** । अविद्याधीनजीवविभाग-स्यानादित्वादुद्देश्याभावो ऽसिद्धः । अनादित्वाच्च मायाया आरचनाभावः । संसारस्याऽनादित्वात्संसारिणं कथं कुर्यादित्यचोद्यमित्यर्थः । न मायाकृत-

संसारे प्रयोजनानुयोगो गन्धर्वनगरादिभ्रमवदित्यादिशब्दार्थः । अविद्योपाधिवर्णनं नाममात्रभेदादिति भाष्यविरुद्धमित्याशङ्क्याह अत्र चेति । नामेत्यवस्तुत्वेनाविद्योक्तिरित्यर्थः । यदा दर्पणादयो ऽपि मुखादाववदातत्वादेर्भानाभाने तन्त्वते तदा कैवाऽविद्यायाः कथेत्याह यथा हीति । अविद्या गुहा न गिरिदरी । सा चैकस्मिन् स्वयंप्रभे निरंशे ऽपि भानाभाने वर्तयत्यसंभावनीयावभासचतुरत्वादिति भाष्यटीकयोर्भावः । नन्वैक्यासिद्धावुपाधिना भानाऽभानसमर्थनं तदेवासिद्धमिति शङ्कते अस्तु तर्हीति । ये तु निर्बन्धं कुर्वन्तीति भाष्यं व्याख्यानपूर्वकं प्रतीकेन आदत्ते ऽपि त्वित्यादिना इतीत्यन्तेन । आरम्भरणस्य वेदान्तार्थबाधकत्वं भाष्योक्तं स्फुटयति ब्रह्मण इति । भागशः परिणामे कार्यत्वं सावयवत्वाततश्चानित्यत्वं सर्वात्मना परिणामे च सर्वाभावादनित्यत्वं स्यादित्यर्थः । अनेन कृतकमनित्यमिति भाष्यं व्याख्यातम् । न्यायेनासङ्गतिर्व्याघातात् । श्रौतुर्नामन्यायासङ्गतिमाह एवमिति । भिन्नयोरैक्यायोगादैकत्वशास्त्रविकल्पनमसङ्गतमित्यर्थः । सम्यानभेदो नैरन्तर्यमात्रमस्थानम् । अथ नदीनाय:परमागतः समुद्रावयविनैक्यं यान्ति तत्राह एवं समुद्रादपीति । ३२० । ५९

भास्करस्य मतमनूद्य दूषयति ये त्वित्यादिना । सावयवत्वमत्र यथारब्धत्वं सांशत्वं भागवत्त्वमात्रमिति परो मेने । शब्दप्रवणताऽर्थमित्यस्थानदशायां कार्यकरत्वात् सत्यत्वमित्युक्तम् । दिगादेः श्रोत्रमिति मते दृष्टान्तमाह वायोरिति । नेत्याकारकर्णीय नगनत्संयोगयोः प्राप्तयोराकाशाधनिर्देशादन्यथा चानिर्देशात् कल्पितनभोऽवच्छेदो नभ:प्रगमान्न कर्णसंत्वसंयोगो वा आकाशात इत्युक्तं स्यादित्यर्थः । किं व्याप्तो संयोगो न वा । आद्यमनुपपत्त्याश्रितस्य द्वितीये निरस्यति न हीति । व्याप्तिपक्षमादायाऽनुपपत्त्यस्यान्यथासिद्धिमाशङ्क्याह* व्याप्त्यैवेति । कर्णस्य परिच्छेदात्कार्तित्वप्रथेत्यर्थः । परिहृते ऽपि सर्वत्र प्रथनप्रसङ्गं तत्कार्यस्य सर्वत्रापत्तिमाह न नामेति । अज्ञानस्य तस्य शब्दधीहेतुत्वादित्यर्थः । इदानीमंशमात्रसाधारणं दूषणमाह न चेति । भिन्नयोर्नागांशित्वमश्वमहिषवच्चाभिन्नस्यैकैकवन्नापि भिन्नाऽभिन्नयोस्तादृशोऽस्य समन्वयसूत्रे उक्तत्वादित्यर्थः ।

---

* अन्यथासिद्धिमाहेति २-३ पु पा । † व्या० सू० अ० १ पा० १ सू० ४ ।

नभोंशस्याविद्याकल्पितत्वमाक्षिप्य समाधत्ते न च काल्पनिक इति । यत्काल्पनिकं न तदज्ञानदशायामस्ति रज्जुभुजङ्गवच्छ्रोत्रत्वाशो यदि काल्पनिकत्वेन ज्ञानमात्रप्राग्जीविकः* प्रतीतसत्ताकस्तर्हि कथमज्ञायमाने

२२ । ५ ऽस्ति । इष्टप्रसङ्गतामाशङ्क्याह असंश्चेति । अज्ञातत्वेन हि श्रोत्रं शब्द-धीहेतुस्तदज्ञानदशाया यद्यसत्स्यात्ततः शब्दधीर्न स्यादित्यर्थः । अज्ञा-तत्वं तदानीमसिद्धमित्यापादकाऽसिद्धिमाह अज्ञातत्वेति । कुतो ऽसिद्धि-रत आह कार्येति । निगूढो ऽत्राभिसन्धिस्तमजानन् शङ्कते कार्यात्पा-दादिति । शब्दोपलब्धिकार्यलिङ्गकानुमानाद्या श्रोत्रस्याभिव्यक्तिः सा कार्या-त्पराचीति प्राक् कार्यादसच्छ्रोत्रं स्यात्तद्बलात् तत्सत्त्वे चक्रकं सति श्रोत्रे तत्कार्यं तस्मिन्सति श्रोत्रानुमानं ततश्च श्रोत्रसत्त्वमिति । तथा च नियत-प्राक्सत्त्वात्मककारणत्वमस्य न स्यादित्यर्थः । निगूढाभिसन्धि प्रकटयति न पूर्वेति । पूर्वपूर्वकार्यलिङ्गकानुमित्युपाधिकसत्त्ववतः श्रोत्रादिदानीन्त-नकार्योदय इत्ययुक्तमजानतामपि श्रोत्र शब्दोपलम्भादिति चेत्तत्राह असत्यपीति । यथा कल्पितप्रतीतिः सत्त्वोपाधिस्तथा तत्संस्कारो ऽपी-त्यर्थः । एतदुक्तं भवति । अभासमानं कार्यकर श्रोत्रमिति न वास्तवं सत्त्वं कल्प्यं भ्रमसंस्कारोपाधिकसत्त्वसंभवादिति । अथ संस्कारः कुतः । प्राक्तना-नुमितेरिति चेत्तर्हि अनवस्थेति शङ्कां परिहरति अनादित्वाच्चेति ।

। ११ अथ नैकैकस्यानादित्वं न च प्रवाहो नाम वस्त्वत आह अस्तु वेति । नोपपद्यते ऽर्थः परमार्थत्वं यस्यास्तस्या भावस्तत्त्वम् । कर्णनेमि-मण्डलोपाध्यधीनं सत्त्वं श्रोत्रस्येति नाज्ञातसत्त्वविरोधो निरुपाधिकभ्रमेषु प्रातीतिकसत्ता इति वा परिहारः । किञ्च ।

आरभ्य श्रोत्रमस्माकं नभसा दिग्भिरेव वा ।
वायोः सांशत्वतः प्राणो भागः सत्यश्च संभवेत् ॥

रूपाणि शरीराणि विचित्य निर्माय तेषां नामानि कृत्वा तेषु प्रविश्याभिवदन् य आस्ते एत महान्तं पुरुषमहं वेदेत्यर्थः† ॥

* मात्रजीविक इति १ पु. पा. । † पर्यन्त सकृत ३-२ पृ. ।

६ अत्र षष्ठ वाक्यान्वयाधिकरण पूर्णम् । तत्र सूत्राणि ४—वाक्यान्वयात् १९ प्रति-ज्ञासिद्धेर्लिङ्गमित्याश्मरथ्यः २० उत्क्रमिष्यत एवंभावादित्यौडुलोमिः २१ अवस्थिते-रिति काशकृत्स्नः २२ ॥

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥    १२२ । १०

मध्येपादं वृत्तकीर्तनस्य प्रयोजनमाह **स्यादेतदिति** । व्यवहित-सम्बन्धापौनरुक्त्ये फले इत्यर्थः । जन्मादिसूत्र*सङ्गत्यभिधित्सायां प्रथम-सूत्रार्थानुवादेन यथाभ्युदयहेतुत्वादित्यादिभाष्योक्तेन किंप्रयोजनमत आह **अत्र चेति** । ब्रह्मलक्षणस्य कारणत्वस्य विचारप्रतिज्ञया सङ्गतिमुक्त्वा तेना-स्याधिकरणस्य कारणविशेषविचारपरस्य सङ्गतिरुक्ता । आकस्मिके हि लक्षणे तद्विशेषचिन्ता ऽप्याकस्मिकी स्यादित्यर्थः । अत एवाध्यायसङ्गतिश्च । ब्रह्मकारणत्वाभ्युपगमेन विशेषविप्रतिपत्तिनिराससाम्यात्वादसङ्गतिः । अवशेष-माहेत्युक्ते तमवशिष्यमाणमर्थमाह **एतदुक्तमिति** । कारणत्वमात्रं लक्षण-मुक्त्वा यदि ब्रह्म निमित्तमेवेति पक्ष आश्रीयेत तदा जगदुपादानमभ्युपेयं न वा । आद्यं निरस्य द्वितीयं निरस्यति **असंभवादेति** । भावकार्यस्य गगनादेरवश्याश्रयणीये उपादाने तदधिष्ठातृत्वेन निमित्तत्वं वक्तव्यं तद-नभ्युपगमे तन्न स्यादित्यर्थः । उभयकारणत्वपक्षे प्रधानाऽनभ्युपगमान्नाति-व्याप्तिः । अद्वैताऽव्यासेधकत्वाच्चैवंविधकारणत्वस्य न लक्ष्याव्याप्तिर्नासम्भव इत्यर्थः । एतदधिकरणसिद्धवत्कारेण च जन्मादिसूत्रे उभयकारणत्वव्यव-हारः । यद्यपि तदनन्तरमिदमारब्धव्यं तथापि निर्णीततात्पर्यैर्वेदान्तैर्नि-मित्तत्वमात्रसाधकानुमानस्य कालातीतत्वं सुवचमिति समन्वयावसाने लिलिखे । अप्रदर्शिते तु विषये समन्वयो दुष्प्रतिपाद इति कारणतामात्र-मेवोक्तम् । ईक्षितृत्वश्रुतेरेकविज्ञानेन सर्वविज्ञानप्रतिज्ञानाच्च ब्रह्म निमित्त-मेवोतोपादानमपीति संशये पूर्वत्र प्रतिज्ञां मुख्यामाश्रित्य जीवपरत्वं वाक्यस्य निरस्तम् इह तु निमित्तोपादानभेदाद्गौणी सेति सङ्गतिमभिसन्धाय पूर्व-पक्षमाह **ईक्षेति** । ब्रह्म न द्रव्यप्रकृतिरीक्षितृत्वात्कर्तृत्वात्स्वतन्त्रत्वादिति    ३२३ । यावत् । प्रभुत्वाच्च राजवत् । सुवर्णाद्युपादाने राज्ञि साध्यवैकल्यव्यावृत्तये प्रतिज्ञाया द्रव्यपदम् । ब्रह्म न पृथिवीप्रकृतिर्निर्गन्धत्वादभाववदित्यादिप्रयो-गान्मत्वा ऽऽह **असरूपतेति** । एतेषामनुमानानामाशङ्कातीतकालतां विप-यव्यवस्थया परिहरति **आगमस्येति** । आगमे हि यत इति पञ्चमी न प्रकृतावपि तु हेतुत्वमात्रे हेतुमनुष्येभ्यो ऽन्यतरस्यां रूप्य इति हेतौ मनु-

* ब्र· सू· अ· १ पा· १ सू· २ ।    + द्वितीयनिराससमाहेति ग पु· पा ।

प्याच्च ल्यप्प्रत्ययविधौ तत आगत इति प्रकृतस्य पञ्चम्यर्थस्य हेतोरिति विशेषणेन हेतावपि पञ्चमीज्ञापनात् । अतो न विरोध इत्यर्थः । ननु

२३ । १८ निमित्तोपादानभेदे कथं प्रतिज्ञादृष्टान्तयोजना तत्राह **एकेति ।** इत्यादिना यत्प्रतिज्ञातमित्यन्वयः । ननु प्रतिज्ञादृष्टान्तौ प्राधान्यपरौ नेत्याह **न मुख्य इति ।** नन्वनुमानबाधाद्गौणता ऽत आह **न चेति ।** अस्त्वागमो निमित्तत्वपरस्तत्राह **सर्वे हीति ।** कथमैकान्तिकाऽद्वैतपरत्वं प्रकृतिविकाराभिधायिवेदान्तानामत आह **द्वैतेति ।** कार्यस्य विवर्तत्वेनाधिष्ठानव्यतिरेकेणाभावे वेदान्तानां तात्पर्यमित्यर्थः । यदि तज्ज्ञानात्सर्वकार्यज्ञानार्थं ब्रह्मोपादानमस्तु तर्हि ततो ऽन्यन्निमित्तमत आह **न चेति ।** न केवलमनुमानस्य प्रतिज्ञादिलिङ्गैर्बाधो ऽपि तु श्रुत्या ऽपीत्याह **यत इतीति ।** यतु ज्ञापकाद्धेतौ पञ्चमीति तत्राह **न कारणमात्रइति ।** ज्ञापनेन विध्युन्नयनादुरमिह प्रत्ययविधिप्राप्तप्रकृतित्वोपादानमिति भावः । अपि च गुणवचनेषु हेतुपञ्चमी दृश्यते जाड्याद्बद्ध इत्यादिषु । न च ब्रह्म गुणो ऽनाश्रितत्वाद् येन यत इत्यस्य गुणवचनता स्यादिति जनिकर्तुर्जायमानस्य प्रकृतिरपादानसंज्ञा भवति ततो ऽपादाने पञ्चमीति सूत्रेण प्रकृतौ स्मर्यत इत्यर्थः । भाष्यस्थश्रुतिं व्याचष्टे **दुन्दुभीति ।** सोऽभिध्या ऽनागतवस्तुनीच्छा तस्या व्याख्या **संकल्प इति ।** एतया ऽभिध्यया स्वातन्त्र्य दर्शितं तेन च निमित्तत्वं श्रुतौ दर्शितमित्यर्थः । बहु स्यामित्यभिध्याया ईश्वरविषयत्वेन कार्यकारणाऽभेदसूचनादुपादानत्वमुक्तमित्यर्थः । साक्षाच्चेति सूत्रोदाहृतश्रुतावाकाशशब्दो ब्रह्मवचन इत्याह **ब्रह्मण इति । व्याचष्टे इति ।** उपादानान्तरेत्यादिनेति शेषः । आकाशादेवेति श्रौतावधारणोक्तोपादानान्तराभावं साक्षादिति सूत्रपदेन दर्शयति इत्येवं व्यवहितान्वयेन भाष्यं योजयति **आकाशादेवेति ।** भाष्ये प्रकृतिग्रहणमुपलक्षणार्थमित्यर्थः ।

३२५ । ९ निमित्तोपादानत्वे हेतुपरं यत्कारणमित्यादिभाष्यं व्याचष्टे **कर्मत्वेनेति । पूर्वसिद्धस्येति ।** भेदेनानिर्वचनादभिन्न इवेति योजना । सामान्येन द्रव्यत्वादिना विशेषेण पृथिव्यादिना निर्वाच्यमिति निरुक्तपदव्याख्या **द्वे वाव ब्रह्मणो रूपे इति ।** मूर्तामूर्ते ब्रह्माभेदेन श्रुतं तत्कथं स्याद्यदि ब्रह्मोपादानं न स्यादिति व्यतिरेक सिद्धवत्कृत्यान्वयमाह **यदीति ।** तद्धेदं तर्ह्यव्याकृतं

स्यादिति शेषः । **विशेष्येति*** । साध्यं प्रति विशेष्यस्य हेतुं प्रत्याश्रयस्य च ग्राहकतयोपजीव्यागमविरोधादित्यर्थः । भास्करस्त्विह अध्याय योनिरिति परिणामादिति च सूत्रनिर्देशाच्छान्दोग्यवाक्यकारेण ब्रह्मनन्दिना परिणामस्तु स्यादित्यभिधानाच्च परिणामवादो वृद्धसम्मत इति न प्रतिबोधयति **यं चेति ।** ब्रह्मनन्दिना हि नासतो निष्पादितत्वात्प्रवृत्त्यानर्थक्यं तु सत्त्वाविशेषादिति सदसत्पक्षप्रतिक्षेपेण पूर्वपक्षमादर्श्य न सद्व्यवहारमात्रत्वादिति अनिर्वचनीयता सिद्धान्तिता इतः परिणामस्त्विति मिथ्यापरिणामाभिप्रायं सूत्रं त्वेतदभिप्राय-मेवेत्यर्थः । उदाहरिष्यमाणश्रुतिसम्मतां युक्तिमाह **न खल्विति** । परिणामः सर्वात्मना एकदेशेन वा । नाद्यः । सर्वात्मना प्राक्तनरूपत्यागादनित्यत्वापत्तौ श्रौतनित्यत्वविरोधात् । न द्वितीयः । निष्कलश्रुत्यवगतानंशत्वविरोधादि-त्यर्थः । नित्यत्वादिति हेतुगर्भनिर्देशयोर्विवरणम् ।    ३ २६

एवं सौत्रपरिणामशब्दो विवर्तपरतया योजितः । इदानीं तु यथाश्रु-तमाश्रित्य परिणामत्वेन लोकसिद्धस्य मुख्यसहत्वेन विवर्ततामाह **न च मृद इति ।** मृद एव सत्यत्वावधारणात्कार्यमिथ्यात्वं श्रुतिराह एकमे-वाद्वितीयमित्यादौ साक्षान्नेति नेतीत्यादौ निषेधेन । ननु सृष्टिश्रुतेः सप्रप-ञ्चता अस्तु नेत्याह **न हीति ।** उपक्रमाद्यवगततात्पर्यमहावाक्यमध्यस्था-ऽवान्तरवाक्यस्य प्रधानानुरोधेन मायामयसृष्टिविषयत्वमित्यर्थः ।

अत्र कश्चिदाह भ्रान्ते ब्रह्मोपादानत्वे पूर्वपक्ष एव समर्थितः स्याद् निर्विकारत्वश्रुतयः प्राक् सृष्टेरविकारितामाहुरिति । तन्न । वाक्याभासोत्थ-भ्रममात्रसिद्धं ब्रह्मोपादानत्वमिति हि पूर्वपक्षाशयः स्वप्नवदर्थक्रियास-मर्थप्रपञ्चास्पदत्वं सिद्धान्तसम्मतमिति भेदोपपत्तेः । प्रलयश्रुतिभिरेव प्राग-विकारित्वसिद्धेर्निर्विकारश्रुतिस्तत्परा । निर्विकारित्वं विकारात्यन्ताभावो ब्रह्मधर्मः स चानिर्वाच्यो विकारमनिर्वाच्यं न सहते सत्य इव तत्र घटा-भावः सत्यघटं न चाद्वैतं व्याहन्तीति ॥

---

* विशेष्येतीति नास्ति १ पु० ।

† अत्र सप्तमं प्रकृत्यधिकरणं पूर्णम् । तत्र सूत्राणि ५-**प्रकृतिश्च प्रतिज्ञादृष्टान्ता-नुपरोधात् २३ अभिध्योपदेशाच्च २४ साक्षाच्चोभयाम्नानात् २५ आत्मकृतेः परिणा-मात् २६ योनिश्च हि गीयते २७ ॥**

३२१ । १ एतेन सर्वे व्याख्याता व्याख्याताः ॥ २८ ॥

अस्यातिदेशस्य जन्मादिसूत्रेणाक्षेपसङ्गतिं दर्शयन् अध्यायसङ्गतिमाह स्यादेतदिति । ब्रह्मोररीकृत्य कारणान्तरप्रत्ययस्थानात् पादसङ्गतिः । उपप्लवमानत्वाद् बुद्धौ प्रतिभासमानत्वात् ।

जगतः प्रकृतिर्ब्रह्म यदि स्यान्मृत्तिदर्शनात् ।
अणवादयोऽपि किं न स्युर्वटधानानिदर्शनात् ॥

इत्यवान्तरसङ्गत्यधिकरणङ्के । न्यग्रोधफलमाहरेति भिन्धीति किमत्र पश्यसीति अणव्य इमा धाना इति आसामेकां भिन्धीति किमत्र पश्यसीति न किं चन भगव इति एतस्य सोम्यैषोऽणिम्न एव महान्न्यग्रोधस्तिष्ठतीति जगतः प्रागवस्थाया दृष्टान्तः श्रूयते । अत्र न किं चनेति शून्यस्वभाववादावणिम्न इत्यदृश्यमानाणुनिर्देशादणुवादश्च भान्ति दार्ष्टान्तिका इति । सिद्धान्तस्तु

मृदादयो हि दृष्टान्ताः प्रतिज्ञामनुरुन्धते ।
धानास्तामुपरुन्धाना भक्तिमार्गं प्रपेदिरे ॥

इह खल्वेकविज्ञानात्सर्वविज्ञानप्रतिज्ञातं प्रधानं नासदादिपक्षेषु कल्पते अतो न किं चनेत्यनभिव्यक्तिरणिम्न इति सूक्ष्मता चोक्तेति । अध्या-

,, । ४ यार्थं सङ्कलयति प्रतिज्ञेति । प्रथमसूत्रे विचारप्रतिज्ञा । लक्षणं द्वितीये । लक्ष्यमाणे समन्वयः चतुर्थे । स च तत्रैवेति शिष्टायां त्रिपाद्यां नान्यत्रेति चतुर्थपादे । इत्येतत्सर्वमत्राध्याये साधितमित्यर्थः* ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदनुभवानन्दपूज्यपादशिष्यभगवदमलानन्दविरचिते वेदान्तकल्पतरौ प्रथमाध्यायस्य चतुर्थः पादः समाप्तः ॥ सम्पूर्णश्च समन्वयाख्यः प्रथमोऽध्यायः ॥

---

| | अस्मिन् पादे | आदितः |
|---|---|---|
| अधिकरणानि | ८ | ४० |
| सूत्राणि | २८ | १३४ |

* अत्र अष्टमम् सर्वव्याख्यानाधिकरणं पूर्णम् । तत्र सूत्रम् १-एतेन सर्वे व्याख्याता व्याख्याताः २८ इति ॥

# वेदान्तकल्पतरुः ।

निखिलदर्शनपारदृश्ववाचस्पतिमिश्रकृतभामतीव्याख्यारूपः
परमहंसपरिव्राजकाचार्यवर्यश्रीमदमलानन्दभगवत्प्रणीतः ।

अथ द्वितीयो भागः तृतीयाध्यायमारभ्य चतुर्थाध्यायान्तः ।

काशीस्थराजकीयप्रधानसंस्कृतपाठशालायां साहित्यशास्त्राध्यापकेन
मानवल्ल्युपाह्वतैलङ्गरामशास्त्रिणा सपरिष्कारं संशोधितः ।

काश्याम्
मेडिकल हाल नाम्नि यन्त्रालये
ई. जे. लाजरस कम्पन्याख्येन मुद्रयित्वा प्रकाशितः ।

विक्रमसंवत् १९५४

श्रीः ।

# विज्ञापनम् ।

---

इतः किल वर्षत्रयात्पूर्वमस्य वेदान्तकल्पतरुनामकस्य भामतीव्याख्यानरत्नस्य मुद्रणकार्यं समारभ्य तद्दर्शनोत्कण्ठितानां तात्कालिकौत्सुक्यविनोदनाय प्रथमाध्यायसमाप्तिपर्यन्तमादिमं भागं यावच्छक्यं त्वरया संशोधनपुरस्सरं समुद्र्य तेषां पुरत उपहारीकृतवानस्मि खलु १९५८ वैक्रमवत्सरे। अथ च तथैवोत्साहमङ्गीकृत्य यतन् क्रमशोऽनुवर्तितकार्यो दिष्ट्याऽद्यावशिष्टं द्वितीयाध्यायमारभ्य चतुर्थाध्यायान्तं भागं विदुषां नयनपथमवतारयितुं नाचितप्रयत्नोऽस्मीति कामप्यागतमानन्दमनुभवामि ।

अस्मिंश्च भागे पूर्वस्मिन्निव प्रदत्ताधिकरणसूचीपत्रः प्रदर्शितशुद्धिपत्रश्च विदुषामधिकरणमीलनाय यथाक्रमेण तत्सूचीपत्रमादितः पृथग् निर्मितवानस्मि । वैयासिकवेदान्तसूत्रपाठं च तद्विवृतिं सौकर्यायाकारक्रमेण विनिवेश्य तत्तदन्यान्यधिकरणप्रधानसूत्राणि सपुष्पचिह्नैः स्थूलतराक्षराणि च स्थूलैरक्षरैर्विनिवेशितवानस्मि उपन्यस्तवांश्चास्मि तेषामध्याय,पाद,सूत्रा,-धिकरणाङ्कान् यथाक्रमम् । गायामि च कोटिशो धन्यवादानखिलसद्गुणनिधानस्य परमेशितुर्यदनुग्रहादिदं महत्कार्यं निरवद्यं फलेग्रहि सम्पादयितुं पारितवानस्मि ।

वितरामि च तेभ्यो महाशयेभ्यः पूर्वभागे सुगृहीतनामधेयेभ्यो यैस्तावत् पुस्तकवितरणादिना साहाय्येन संवर्धितोत्साहोऽस्मि ।

अनेन च ग्रन्थेन सह मुद्यमाणस्यैतद्व्याख्यानस्य परिमलस्य द्वितीयाध्यायान्तं भागं विदुषां दृग्गोचरतामुपनीय साम्प्रतमवशिष्टस्याध्यायद्वयस्य तथाकरणे प्रवर्तितप्रयत्नोऽस्मि, आशासे चागामिनि वत्सरे पञ्चषेषु दिनेषु निजमनोरथपूर्तिं, प्रार्थये च परमेश्वरान्निखिलप्रत्यूहपरीहारम् ।

अथ च महान्तमायासमनुभूय प्रकाशिते ग्रन्थरत्ने स्वार्थवशाद्वा, विषयसौष्ठवाद्वा, ग्रन्थकर्तृगौरवाद्वा, मादृशजनोत्साहवर्धनाय वा, ममोपरि दयया वा दोषदृष्टिमुत्सृज्य नयनार्पणायाभ्यनुग्रहप्रार्थना तु गुणैकगृह्याणां स्वतःप्रवृत्तानामन्तर्वाणिवरेण्यानां पुरतो ऽप्रबुद्धप्रबोधनरूपतया मामकीनं वैयात्यं वा प्रकाशयेत्, सिद्धसाधनरूपतया पिष्टपेषणकल्पा वा भवेदिति जानन्नपि तेषां सौजन्यपर्यालोचनेन जातधृतिर्वस्तुतो निजविनयाविष्करणाय प्रवृत्तो नापराधपक्षे न वा मुखरतया उपेक्षापक्षे निक्षिप्तो भवेयमिति बाढं विश्वसिमीति । शम् ॥

| | |
|---|---|
| वाराणस्याम् | मानवल्ल्युपाह्वः |
| वैक्रमसंवत् १९५४ | तैलङ्गरामशास्त्री । |

# द्वितीयाध्यायमारभ्या समाप्तेरधिकरणसूची।

## तत्र अविरोधाख्यद्वितीयाध्यायस्य

### प्रथमे पादे



### द्वितीये पादे



### तृतीये पादे

## सूचीपत्रम्।



### चतुर्थे पादे



### द्वितीयाध्यायगताधिकरणसूत्रसंख्या

| पादे। | अधिकरणानि। | सूत्राणि। | आदितः अधि०। | आदितः सूत्राणि। |
|---|---|---|---|---|
| १ | १३ | ३७ | १३ | ३७ |
| २ | ८ | ४५ | २१ | ८२ |
| ३ | १७ | ५३ | ३८ | १३५ |
| ४ | ९ | २२ | ४७ | १५७ |

---

## साधनाख्यतृतीयाध्यायस्य

### प्रथमे पादे।



### द्वितीये पादे

## चतुर्थे पादे



---

## तृतीयाध्यायगताधिकरणसूत्रसंख्या ।

| पादे । | अधिकरणानि । | सूत्राणि । | आदितः अधि॰ । | आदितः सूत्राणि । |
|---|---|---|---|---|
| १ | ६ | २७ | ६ | २७ |
| २ | ८ | ४१ | १४ | ६८ |
| ३ | ३६ | ६६ | ५० | १३४ |
| ४ | १७ | ५२ | ६७ | १८६ |

---

# फलाख्यचतुर्थाध्यायस्य

## प्रथमे पादे

## द्वितीये पादे ।



## तृतीये पादे



## चतुर्थे पादे



## चतुर्थाध्यायाधिकरणसूत्रसंख्या ।

| पादे । | अधिकरणानि । | सूत्राणि । | आदितः अधि० । | आदितः सूत्राणि । |
|---|---|---|---|---|
| १ | १४ | १९ | १४ | १९ |
| २ | ११ | २१ | २५ | ४० |
| ३ | ६ | १६ | ३१ | ५६ |
| ४ | ७ | २२ | ३८ | ७८ |

| पृ॰ | प॰ | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ४७७ । | २६ | ११७ | १३७ |
| ४८० । | २ | सिद्धक- | सिद्धिक- |
| ४८८ । | शिरसि / Heading { | अ॰ ४ पा॰ ३ | अ॰ ३ पा॰ ४ |
| ४९५ । | २४ | उष्ण- | उष्णा- |
| ४९८ । | टि ‖ | तद्भत- | तद्भूत- |
| ४९९ । | ६ | कौर्णिप- | कौर्णि- |
| ५०७ । | २३ | १३४ | १५४ |
| ५२१ । | टि॰ * | चापेक्षम् | चापेक्ष्य |
| ५२३ । | २८ | येति । | येति |
| ५२९ । | २३ | १४८ | १६८ |
| ,, । | २४ | ४८६ | ४९६ |
| ५४२ । | २१ | कोर्थ | कार्य |
| ५४६ । | १७ | ढोपा- | ऽढोषा- |
| ५४९ । | २० | वास्थित- | वस्थित- |
| ,, । | टि॰ § | मुक्तिः | मुक्तः |

४५२ । १२ सगुणोति एतस्मतोकाये + इदं चिन्हम्, तत्पृष्ठाधोभागे च + एतच्चिन्हाये–अत्र पञ्चविंशं कामाद्यधिकरणं पूर्णम् । तत्र सूत्रम् १–कामादीतरत्र तत्र चायतनादिभ्यः ३९ ॥ इति टि॰ बोध्या ।

| पृ॰ | प॰ | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ५५३ । | टि॰ * | दुभयं बा- | दुभयविधं बा- |

---

# प्रान्ताङ्कशुद्धिपत्रम् ।

| अशुद्धाः अङ्काः | शुद्धाः अङ्काः | पङ्क्तौ | पृष्ठे |
|---|---|---|---|
| ३७५ । १२ | ३७६ । ४ | २ | २४८ |
| २८२ । ६ | ३८२ । ६ | ३ | २५४ |
| ४५८ । २० | ४५८ । १५ | १२ | ३०० |
| ४७१ । ७ | ४७४ । ७ | १ | ३११ |
| ५०७ । १२ | ५०७ । २१ | १२ | ३३१ |
| ५३५ । १२ | ५३६ । १२ | १ | ३५२ |
| ५८२ । ६१ | ५८२ । १६ | २७ | ३८४ |
| ५९३ । ८ | ५९३ । १८ | २४ | ४०३ |
| ६१३ । ५ | ६१३ । ३ | २५ | ४२४ |
| ६२० । १३ | ६२३ । १३ | ४ | ४३३ |
| ६३३ । १२ | ६३३ । २ | ११ | ४४१ |
| ६९४ । १४ | ६४९ । १४ | ६ | ४५४ |
| ६५६ । १६ | ६५५ । १६ | ४ | ४६० |
| ६७५ । १२ | ६७५ । २ | २ | ४८० |

# वेदान्तकल्पतरौ

## द्वितीयो ऽध्यायः ।

---

**स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनव-
काशदोषप्रसङ्गात् ॥ १ ॥** ३२१ । ९

चेतनजगदुपादानसमन्वयः साङ्ख्यस्मृत्या सङ्कोच्यतां न वेति सर्व-
प्रभाषितत्वसाम्येन बलाबलाविनिगमात्सन्देहे पूर्वपक्षमाह **न खल्विति।**

**विरोधे त्विति ।** औदुम्बरीं स्पृष्ट्वोद्गायेदिति प्रत्यक्षश्रुतिविरुद्धा
सर्वामावेष्टयेतेति स्मृतिर्मानं न वेति सन्देहे वेदार्थानुष्ठातॄणां स्मृतिभिर्मूलश्रु-
त्यनुमानात्प्रत्यक्षानुमितश्रुत्योश्च स्वपराधीनश्रुतिवत्समबलत्वादुदिताऽनु-
दिताद्विवद्विकल्पादिसम्भवान्मानमिति प्राप्ते राद्धान्तः । श्रुतिविरुद्धस्मृतीनां
प्रामाण्यमनपेक्षमपेक्षावर्जितं हेयमिति यावत् । यतो ऽसति विरोधे मूलश्रु-
त्यनुमानं स्वपराधीनश्रुत्योस्तुल्यवत्प्रमितत्वात्समबलता । प्रत्यक्षश्रुतिविरुद्धे
ऽर्थे तु न श्रुत्यनुमानम् । अर्थापहारेण मानस्याप्यपहारादतो मूलाभावाद-
प्रमाणमिति (**पूर्वपक्षी पूर्वपक्षोपपादकः** । अधिकरणारम्भवादीत्यर्थः)* ।

आर्षप्रत्यक्षमूला ऽपि स्मृतिः सापेक्षा वेदस्त्वपौरुषेयत्वादनपेक्ष
इत्याशङ्क्याह **अयमस्याभिसंधिरिति । आजानसिद्धा** स्वभावसिद्धा
च सा ऽनावरणभूतार्थमात्रगोचरा च । भ्रमवत्सत्यानृतगोचरत्वं वार-
यति **मात्रेति ।** एवंभूता तस्य ब्रह्मणो या बुद्धिस्तत्पूर्वको वेदरा-
शिरित्यर्थः । पौरुषेयत्वेन तुल्यत्वमुक्त्वा स्मृतेर्निरवकाशत्वं प्राबल्यहेतुमाह
**न चैता इति । अनन्यपरत्वं** स्फुटतरत्वम् । श्रुतिरनुष्ठानपरा अ-
न्यस्मृत्यनवकाशमाभावान्न सिद्धान्तसिद्धिः सन्देहादित्याशङ्क्याह **तथा
हीत्यादिना ।** देवताधिकरणे योगिप्रत्यक्षस्य सर्मार्थत्वाद्ग्राह्यमस्मदाद्य-
भिप्रायमित्याह **अर्वागिति ।** कपिलादयो ऽर्वाचीनपुरुषविलक्षणा इत्याश- ३२९ । ७

---

* ( ) एतन्मध्यस्थो ग्रन्थो नास्ति १-५ पु० । ब्र० सू० अ० १ पा० ३ सू० २४-३३ ।

३२९ । ९ दृष्ट्वाह **न तावत्कपिलादय इति** । प्राचि भवे तदनुष्ठानवताम् इति सम्बन्धः । तच्छब्देन वेदार्थो विवक्षितः **पूर्वोक्तमिति** । विप्रतिपत्तौ चेत्यादिभाष्येण पूर्वोक्तं स्मारयतीत्यर्थः । **श्रुतिसामान्यमात्रेणेति** । सग-रपुत्रप्रतप्तुः साङ्ख्यप्रणेतुश्च कपिल इति शब्दसाम्यमात्रेणेत्यर्थः* । यथा नृत्यं कुर्वन्त्यपि नर्तकी नर्तकदर्शितक्रमेणैव नृत्यतीति न स्वतन्त्रा एवमी-श्वरः प्राचीनक्रममनुसृत्य विरचयन्वेदं न स्वतन्त्रः क्रमोपगृहीतवर्णात्मा च वेदोऽर्थप्रमितिकर इति न वक्त्रपेक्षमस्य प्रामाण्यमित्याह **सत्यमिति** । फलितमाह **तेनेति** । यतोऽनादिः कार्यकारणभावस्तेन न प्रागभूतस्य शास्त्रस्य तदर्थज्ञानपूर्विकाऽभिनवा क्रिया किं तु नियतक्रमस्य तस्य संस्काररूपेणाऽनुवर्तमानस्य स्मरणेन व्यक्तीकार इत्यर्थः ।

ननु न नर्तक्यादिवदज्ञ ईश्वरस्ततः शास्त्रक्रियातः प्रागेव तदर्थ-
३३० । २१ ज्ञानवत्त्वात्कपिलतुल्यः किं न स्यादत आह **शास्त्रार्थज्ञानं चेति** । पूर्व-वर्णानुपूर्वी हि शास्त्रम् । तथा च यदा तदर्थः स्फुरति तदैवानुपूर्व्यपि संस्कारारूढा स्फुरतीत्यादर्शात्मकशास्त्रस्वरूपमात्रज्ञानात्तत्करणोपपत्तौ न शास्त्रार्थज्ञानस्य हेतुतेत्यर्थः । स्वकृतप्राचीनादर्शापेक्षत्वाच्च माणवकवैलक्ष-ण्यमीश्वरस्य । शास्त्रस्य वक्तृज्ञानाऽजन्यत्वेऽपि नान्तरीयकत्वेन शास्त्रस्फुरणे तदर्थस्फुरणात्सर्वज्ञेश्वरसिद्धिः । तदर्थज्ञानवत्ता च प्रलयान्तरितस्मृतेः ज्ञातृत्वात्सिध्यतीशस्य । न हि माणवकेऽस्ति तत् । सति चैवं शास्त्रयो-नित्वशास्त्रविषयाधिकविज्ञानवत्त्वयोर्व्याप्तिः । कृत्तिकोदयरोहिण्यासत्तिवत् तद्भावनियतभावत्वरूपा न तु शास्त्रार्थज्ञानशास्त्रकरणयोर्हेतुहेतुमत्त्वकृता । ननु गुणवद्वक्तृज्ञानजन्यत्वाभावे कथं शास्त्रस्य प्रामाण्यमिति चेत् स्वत इत्याह **शास्त्रं चेति** । प्रमाणानां प्रामाण्यस्य स्वतस्त्वात्कपिलादिवचसस्तथा
३३१ । २ किं न स्यादत आह **कपिलादिवचांसि त्विति** । तेषां कपिलादिवचसा-मर्था एवार्था यासां तास्तथोक्ताः‡ । तासां स्मृतीनामर्था एवार्था येषामनु-भवादीनां ते तदर्थानुभवास्ते पूर्वा यासां ताः स्मृतयस्तथा । यथाऽनपेक्ष-त्वेन शीघ्रतरप्रवृत्तश्रुत्या तद्विरुद्धलिङ्गस्य श्रुतिकल्पनापेक्षत्वेन विलम्बित-

* सामान्यमात्रेणेति १ पु० पा० । † अधिकविषयविज्ञानेति २-२ पु० पा० ।
‡ तथोक्ता इति नास्ति २ पु० ।

प्रकृतेः परिच्छेदकत्वमपह्रियते एवमनपेक्षत्वात् तद्विरुद्धकापिलवचसः सापेक्षत्वेन विलम्बिनः प्रामाण्यमपह्रियते इत्यर्थः । यावदिति । कथं चिदित्यर्थः । दौहित्रस्य कर्म दौहित्र्यम् । वन्ध्या चेत्स्मरेदिदं मे दौहित्रेण कृतमिति सा स्मृतिरप्रमाणं मूलस्य दुहितुरभावादेवमत्रापि मूलभूतानुभवाभावात् स्मरणाभाव इत्याह वन्ध्याया इवेति । न चार्षमिति । उपजीव्यवेदविरोधस्योक्तत्वादित्यर्थः । ३३१ । ४

अव्यक्तं ज्ञानाल्लीयते* अहं सर्वस्येति । प्रभवत्यस्मादिति प्रलीयतेऽस्मिन्निति च प्रभवप्रलयौ । तस्मादात्मनोऽधिष्ठातुः प्रभवन्ति समूलमुपादानम् । शाश्वतिकोऽनादिः । नित्यो ध्वंसवर्जितः । ज्ञानैः पूरयति यः स सर्वेषामात्मा । पुरुषा जीवाः । बहूनां देहिनां† योनिः पृथिवी । विश्वं पूर्णम् । गुणैः सर्वज्ञत्वादिभिरधिकम् । सर्वात्मकत्वाद्विश्वमूर्द्धादित्वम् ‡ ॥

**एतेन योगः प्रत्युक्तः ॥ ३ ॥** ३३१ । १५

एषां हिरण्यगर्भादिशास्त्राणाम् । योगस्वरूपं चित्तवृत्तिनिरोधस्तत्साधनं यमादि तदवान्तरफलं विभूतिरणिमादिः । किंचिन्निमित्तीकृत्येति । चित्तनिरोधो हि क्व चिदालम्बने निवेशाद्भवति । पुरुषे च सूक्ष्मत्वादनिवेशाऽसम्भवात्प्रधानादि चित्तालम्बनत्वेन व्युत्पादितमित्यर्थः । प्रतिसर्गः प्रलयः । वंशानुचरितं तत्कर्म । तत्प्रतिपादनेनेति । तच्छब्देन कैवल्यादिपरामर्शः । ईक्षत्यधिकरणन्यायेन प्रधानादौ प्रामाण्यमाशङ्क्याह अन्यपरादपीति । यत एव प्रधानादेरविवक्षाऽत एव गुणानां सत्त्वादीनां परमं रूपमधिष्ठानमात्मा दृष्टिपथप्राप्तं दृश्यं प्रधानादि मायेव मिथ्या तत्तु तुच्छकं सुतुच्छकमिति§ ।

प्रधानादावप्रामाण्यं¶ योगशास्त्रस्यानुवादकत्वं वक्तव्यं तत्कथं प्राप्त्यभावादित्यत आह अलौकिकसिद्धानामिति । वैदिकलिङ्गानां न्यायाभाससिद्धानाम् अनुवाद्यत्वमित्यर्थः । अष्टकादिस्मृतिवदिति । ३३२ । ४

---

* प्रलीयते इति ३ पु॰ पा॰ । † देहानामिति २ पु॰ पा॰ ।

‡ अत्र प्रथमं स्मृत्यधिकरणं पूर्णम् । तत्र सूत्रे २—स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् १ इतरेषां चानुपलब्धेः २ ॥

§ व्यासभू॰ अ॰ १ पा॰ ८ सू॰ ४४-३५ । ¶ तत्सुतुच्छकमिति २-३ पु॰ पा॰ ।

अष्टका: कर्तव्या: तटाकं खनितव्यमित्यादिस्मृतयो न प्रमाणम् धर्मस्य वेदैकप्रमाणत्वादष्टकादिश्रेय:साधनत्वे वेदानुपलम्भात् स्मृतेश्च भ्रान्त्यापि सम्भवादिति प्राप्ते राद्धान्तितम् । वेदार्थानुष्ठातृणा*मेव स्मृतिषु सनिबन्धनासु कर्तृत्वाद् मूलभूतवेदमनुमापयन्त्य: स्मृतय: प्रमाणमिति । तत्कारण साङ्ख्ययोगाभिपन्नमिति श्रुतौ साङ्ख्य†योगशब्दाभ्यां ज्ञानध्याने निर्दिष्टे इत्युक्तं भाष्ये तदुपपादयति संख्येति । कथं चित्तवृत्तिनिरोधवाचियोगशब्देन चिन्तारूप ध्यानमुच्यते तत्राह उपायेति ।

शरीरयोगाशिरांसि चीणयुक्तानि यस्मिंस्तत्तथा । एतां ब्रह्मविषयां विद्यां योगप्रकारं च मृत्योर्लब्ध्वा नचिकेता ब्रह्म प्राप्तोभूत् । एको बहूनां यो विदधाति कामानित्युपक्रम्य श्रुतं तत्कारणम् इति तेषां कामानां कारणं ज्ञानिभि‡र्ध्यानिभिश्च प्राप्तं देवं ज्ञात्वा मुच्यते† ॥

३४ । १६ **न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ४ ॥**

चेतनोपादानकजगद्वादिसमन्वयस्य गगनादि न चेतन§प्रकृतिकं द्रव्यत्वाद्॥ घटवदित्यनुमानेन सङ्कोचसन्देहे वेदविरुद्धस्मृतेर्मूलाभावादमानत्वमुक्तम् । अनुमानमूल तु व्याप्तिपक्षधर्मते लोकसिद्धे इत्युत्तराधिकरणस्तोमस्य स्मृत्यधिकरणेन सङ्गतिमाह अवान्तरसङ्गतिमिति । वेदविरुद्धार्थत्वेन स्मृतेरदुष्टलक्षणयादतन्मूलत्ववद् ब्रह्मवैलक्षण्याज्जगदप्यतन्मूलमिति निरन्तरसङ्गति: । एकश्रुत्यनुसारेणेतरश्रुतिनयनदृष्टान्तमात्रात्तर्कवशेन श्रुतिसङ्कोचो न युक्त: वैपरीत्यस्यापि सम्भवादित्याशङ्क्याह सावकाशा इति । श्रुतीनां निमित्तकारणे सावकाशत्व तर्कस्यानौपाधिकत्वेनानवकाशत्वम् । दृष्टसाधर्म्येणेति । प्रत्यक्षदृष्टान्ततुल्यत्वेनानुमानात्पक्षे साध्येऽ गमिते तस्यापि प्रत्यक्षता सम्भाव्यत इत्यर्थ: । तर्कमाह प्रकृत्येति । ब्रह्मासारूप्यं जगतो दर्शयति विशुद्धमिति । प्रधानसारूप्यमुपपादयति एक इति । आनुश्रविके ऽपि सुखाद्यात्मत्वमाह स्वर्गेति । निरतिशयत्वात् आगमापायिधर्मरहितत्वादित्यर्थ: । जगतो ऽचेतनत्वश्रवणमपि चैतन्यानभिव्यक्तिप-

* वेदार्थानुष्ठानपराणामिति ३। २ पु पा ।  † चेतसांख्येति २ पु ।

‡ अत्र द्वितीयं योगप्रयुक्त्यधिकरणं पूर्णम् । तत्र सूत्रम् १-एतेन योग: प्रत्युक्त: ३ ॥

§ अचेतनेति २-३ पु पा ।  ॥ कार्यद्रव्यत्वादिति २-३ पु पा ।

¶ साध्ये इति नास्ति १ पु ।

रमिति शङ्कापाकरणार्थं भाष्ये ऽनवगम्यमानग्रहणं तद्व्याचष्टे **शब्दार्थादिति** । ३३६ । १८ आर्थस्य जगच्चैतन्यस्य श्रुत्याऽचेतनत्वबाधकत्वायोपबृंहकलोकानुभवाभावो ऽनवगम्यमानपदद्योतित इत्यर्थः । आर्थत्वे उपोद्बलकापेक्षा तदेव नेत्याह **न पृथिव्यादीनामिति** । श्रुतार्थापत्त्यनुगृहीतश्रुतिभिर्जगच्चैतन्यश्रुत-यश्चैतन्याऽनभिव्यक्तिपरत्वेन व्याख्येया इत्यर्थः । **प्रथमे ऽध्याये** ईक्षत्य-धिकरणे इति । **मुख्यतयेति** । ऐक्षतेत्यस्य मुख्यत्वं तेजआदिशब्दा लाक्षणिका एव तदिदमुक्तं **कथं चिदिति** ।

साध्याऽसाधकः पक्ष एव वर्तमानो ऽसाधारणः । यथा सर्वं क्षणिकं सत्त्वादिति । एवं चैतन्याऽनन्वितत्वमपीत्याह **तृतीयस्त्विति** । **प्रमाणेति** । प्रमाणविषयस्य वचनयुक्त्या*भासनिरासेन विवेचकतयेत्यर्थः । श्रवणस्य पक्षत्वादित्यसम्भावनानिरासकसाधारण्यत्वादितर्काभिप्रायम् । मननस्य सा-क्षात्काराङ्गत्वं ध्यानव्यवधानेनेत्याह **मतो हीति** । अचेतनस्य जगत्का-रणस्य सर्गान्तरकाले विज्ञानात्मकजीवरूपता न सम्भवती[1]त्यर्थः ।

प्रागुत्पत्तेः कारणस्य सत्त्वात्तदभिन्नं कार्यं कथमसदत आह **न का-रणादिति** । यदुक्तं न कारणात्कार्यमभिन्नमिति तत्राह **प्रतिपादयिष्यति हीति** । पृथुबुध्नोदराकारादिस्वरूपेण कार्यं कारणान्न भिन्नं नाप्यभिन्नं न सन्न चासदतस्तद्रूपेण सता दुःसाध्येत्यर्थः । फलितमाह **एवं चेति** । न केवलमुत्पत्तेः प्रागेव स्वरूपेण कार्यस्यासत्त्वमपि तु सर्वदेत्याह **स्वरूपेण त्विति** । रूपः आकारः । **रूपयतीति** निरूपयतीति । ननु घटादिनाशे यथा मृदो न तद्रूपमेवमिहेत्यत आह **न चान्यथेति** । निरन्वयनाशाऽन-भ्युपगमाद्दीपवदनुवर्तमानस्यान्यथात्वं न लोकसिद्ध इत्यर्थः ।

निरन्वयनाशवादिनः कार्यधर्मरूपेण कारणं स्यान्न तथेति आशङ्कते **स्यादेतदिति** । कार्यस्य कारणतावन्मात्रत्वात्कारणानुवृत्त्या सान्वयनाशो- ३४१ । २१ क्तिराकस्मिकीत्याह **यथा रजतस्येति** । लौकिकः पुरुषो जीवो ऽसंश्च न साध्यसमत्वमित्यर्थः । जगत्कारणस्य ज्ञानाद्यभावाशङ्कामाचष्टे **उत्पत्तीति** । **उपरिष्टादिति** । अनन्तरमेव शिष्टापरिग्रहाधिकरणपूर्वपक्षे । सर्वैस्तर्कोप्र-

* वचनस्यार्थेति १ पु पा ।    १ न सम्भवतीति २ ३ पु पा ।

४३ । ११ निश्चित इति कश्चिद् न चरम इत्याह **नानुमानाभासेति ।** स्वाभाविकप्रतिबन्धो व्याप्तिः । नाद्य इत्याह । **अपि चेति ।** चरमो न केवलमविरुद्धः प्रत्युतानुगुण इत्याह **अपि च विचारेति ।**

नैषेति । यथा ब्रह्मविषया मतिस्तर्केण[*] नापनेया प्रापणीयेत्यर्थः । अत्र वा कुतः तर्केणापनेया निरस्या न भवति किं तर्ह्यन्येनैवाचार्येण प्रोक्ता सती सुज्ञानाय फलपर्यन्तसाक्षात्काराय भवति हे प्रेष्ठ प्रियतमेति नचिकेतसं प्रति मृत्योर्वचनं कः अद्धा साक्षादिह ब्रह्म को वा प्रावोचत् छन्दसि कालानियमात् प्रब्रूयादित्यर्थः । इयं विसृष्टिर्यत आबभूव स एव स्वरूपं वेद नान्य इति मन्त्रप्रतीकयोरर्थः । तं सर्वं परादाद्निराकुर्याद् यो ऽन्यत्रात्मनः आत्मव्यतिरेकेण सर्वं वेदेत्यर्थः । अजं जन्मरहितम् । अनिद्रम् अज्ञानरहितम् । अस्वप्नं भ्रमरहितम् । अत एवाद्वैतं तदा बुध्यत इति सम्प्रदायविद्वचनार्थः[*] ॥

४४ । १५ **एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १२ ॥**

अतिदेशस्योपदेशवत्सङ्गतिः । यथा हि वेदविपरीतत्वात्सांख्यादिस्मृतिरतन्मता एवं ब्रह्मकारणवैपरीत्याज्जगन्न तन्मतम् । तन्मतत्वे हि सतो महत्त्यान्नाल्पमिति अतुल्यत्वाशङ्कायामतिदेशः स्यादिति तामाह **न कार्यमिति ।** इयमारम्भणाधिकरणे निरसिष्यमाणा ऽप्यभ्युच्चयत्वेनेह निर्दिश्यते । यत्तु वक्ष्यते उपादानत्वं च कारणस्य कार्यादल्पपरिमाणस्यैव दृष्टमिति सैवैतदधिकरणे निरस्येति । **अस्य** कार्यस्येत्यर्थः । कुलालादिव्यापारात्प्राक् मृद् घटरहिता तदानीं योग्यत्वे सत्यनुपलभ्यमानघटत्वाद् गगनवत् ततश्च सत्त्वविरोधान्न कार्यकारणयोरैक्यमित्याह **किं चेति ।**

२४५ । ५ **येनेति ।** अर्थगतप्रत्यक्षपरोक्षत्वेनेत्यर्थः । घटादिकार्यस्य प्रागुत्पत्तेः सत्त्वे मानमसदकरणादित्याद्यनुमानज उपलम्भो ऽनुमितिरित्यनुमानम् । जगतस्तु

---

* अत्र तृतीयं विलक्षणत्वाधिकरणं पूर्णम् । तत्र सूत्राणि ११-न विलक्षणत्वादस्य तथात्वं च शब्दात् ४ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ५ दृश्यते तु ६ असदिति चेन्न प्रतिषेधमात्रत्वात् ७ अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ८ न तु दृष्टान्तभावात् ९ स्वपक्षदोषाच्च १० तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ११ ॥ † ब्रा. सू. अ. २ पा. १ सू. १४ ।

प्रागवस्थायामागमश्च उपलम्भ आगमः । घटो यदि भिन्नो मृदः तर्हि तत्कार्यं न स्यादश्ववदिति तर्कस्य स ततो यद्यभिन्नः तर्हि तत्कार्यं न स्यान्मृद्वदिति प्रतिरोधमुक्त्वा मूलशैथिल्यमाह अन्यन्तेति । ननु यदि कुम्भात्* कुम्भकारस्यात्यन्तभेदस्तर्हि कथमुपादाननिमित्तव्यवस्था ऽत आह तस्मादिति । परमाणोरपि मूर्तत्वात् कुड्यवत्सावयवत्वमतो न कुड्यत्व-विश्रान्तिरत आह तोर्दार्थान्तरेति ।

सहस्रसंवत्सरेति । पञ्चपञ्चाशतः त्रिवृत संवत्सराः पञ्चपञ्चा- ३४६ । ८
शतः पञ्चदशाः पञ्चपञ्चाशतः सप्तदशाः पञ्चपञ्चाशत एकविंशा विश्वसृजामयने सहस्रसंवत्सरमुपयन्तीत्यत्र संवत्सरशब्दस्य उत्पत्तिवाक्ये मुख्यार्थत्वाभावात् तावदायुष्कररसादिसिद्धमनुष्याधिकारतामाशङ्क्य पक्षं सिद्धान्तितम् । प्रकृतौ हि द्वादशाहे पर्यावृत्तौ भवन्ति त्रय पञ्चदशास्त्रयः सप्तदशाः त्रय एकविंशा इति त्रिवृदादिशब्दास्त्रिवृदादिस्तोत्रीयागाहःपराः समधिगताः । एवं चात्रापि पञ्चपञ्चाशतः त्रिवृत संवत्सरा इत्याद्युत्पत्तिवाक्येष्वहःपरत्रिवृदादिशब्दनिश्चितार्थे सामानाधिकरण्यात्संवत्सरशब्दस्य स्वयं सौरचान्द्रादिनानार्थत्वेनानिर्धारितार्थस्याहःपरत्वैव । एवं चाप निमालोच्य सहस्रसंवत्सरशब्दोऽपि सहस्रदिवससाध्यकर्मपरः । औषध्यादि-सिद्धिकल्पना ऽप्येवं न भवति तस्मान्मनुष्योऽधिकारीति । आरम्भे हि न्यूनपरिमाणान्महदुत्पत्तिनियमो न निवर्तेत उन्नततरगिरिशिखरवर्तिमहास-रुषु भूमिस्थस्य दूराकारानिभासप्रतिभासोपलम्भादित्याह अविशेषसमारोपेणेति ।

**भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ १३ ॥** ३४७ । १

अद्वयब्रह्मणो जगत्सर्गादितः समस्तस्य भेदग्राहिमानविरोधम-देहे सद्भिरगर्भमगतार्थत्वमाह प्रवृत्ता इति । पूर्वत्र जगत्कारणे तर्को ऽप्रतिष्ठित इत्युक्तं तर्हि जगद्भेदे तर्कः प्रतिष्ठित इत्यद्वैतविरोधेन प्रत्यवस्थानात्सङ्गतिः । अत एव तर्काप्रतिष्ठानतर्केण श्रुतेर्मुख्यनिरोधादगतार्थत्व

---

* कुम्भादिति नास्ति ट-३ पु ।

\+ मनुष्याधिकारेति ट-३ पु पा । ‡ अत्र चतुर्थम शिष्टापरिग्रहाधिकरणं पूर्णम् । तत्र सूत्रम १ एतेन शिष्टापरिग्रहा अपि व्याख्याताः १२ ॥

चेत्यर्थः । **प्रवर्त्तमानेति** । स्वविषयप्रतिष्ठविरोधितर्केण सहोन्मज्जननिमज्जनमनुभवन्ती बलाबलविवेकमपेक्षमाणेत्यर्थः । एतद्द्वैधम्यं च प्रवृत्तत्वम् । तर्कस्य प्राबल्यमाह **स्फुटतरेति** । स्थूलनीलादिभेदगोचरत्वात्स्फुटतरत्वम् । प्रतिष्ठितत्वमनुपचरितत्वम् आम्नायो ह्युपचारेणापि सावकाश इति वर्तमानविभागेनापि विरोधसिद्धेर्वर्तमानसाम्योपपादनमतीतानागतयोर्भाष्ये ऽनुपयोगीत्याशङ्क्य वर्तमानविभागसत्यत्वं फलमित्याह **यदीति*** ॥

३४१ । १७ **तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥**

पूर्वाधिकरणे ऽपि भेदग्राहिमानाविरोधोक्तेः पुनरुक्तिमाशङ्क्याह **पूर्वस्मादिति** । अङ्गीकृत्य हि भेदग्राहिमानस्य प्रामाण्यं भेदाभेदयो रूपभेदेन विरोधः परिहृतः इदानीं तु स्वीकृत्य प्रामाण्यं तत्त्वावेदकत्वात्प्रच्याव्य व्यावहारिकत्वे व्यवस्थाप्यते एवंभूतविशेषाभिधानेनोपक्रमो यस्य विरोधपरिहारस्य स तथोक्तस्तदनन्यत्वपदेनाद्वैतमिथ्यात्वोक्तेरेवमुपक्रमत्वम् । अतो परिणामिमृदादिदृष्टान्तोपादानान्न भेदाभेदविवक्षेति मन्तव्यम् । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायां प्रधानस्यानुरोधेन गुणभूतदृष्टान्तस्य विवर्तपरत्वेन नेयत्वादित्याह **एवं हीति** । ननु परिणामपक्षे ऽप्यभेदांशेन† सर्वज्ञानं स्यादत आह **तत्त्वज्ञानं चेति** । भेदानीकृतया उक्तत्वादित्यर्थः । **उपपादितमधस्तादिति** । शिष्टापरिग्रहाधिकरण‡पूर्वपक्ष इत्यर्थः । दृष्टान्तमात्रान्नार्थसिद्धिरिति भाष्ये हेतुरुक्तो दृष्टेति तं व्याचष्टे **ये हीति** । कदा चिद्दृष्टं पुनर्नष्टमनित्यमित्यर्थः । दृष्टग्रहणं प्रतीतिसमये ऽपि सत्त्वव्यावृत्त्यर्थम् । व्यतिरेकव्याप्तिमाह **यदस्तीति** । विमतं मिथ्या सावधिकत्वाद्व्यतिरेके चिदात्मवदित्यनुमानस्य विपक्षे बाधकतामाह **सत्स्वभावं चेदिति** । सत्त्वाऽसत्त्वे विकारस्य स्वरूपमुत धर्मो अर्थान्तरमलीकं वेति विकल्प्य क्रमेण निराकुर्वन्ननुमानस्यानुकूलतर्कमाह **असत्स्वभावं चेत्यादिना** ।

३४९ । २० अर्थान्तरत्वे ऽपि विरोधित्वं शङ्कते **असत्त्वमिति** । विरोधिभूतमसत्त्वं भावस्य किमकिंचित्करमुतासत्त्वकरं स्वरूपं वेति विकल्प्य क्रमेण दूषयति

---

* अत्र पञ्चमम् भोक्त्रापत्त्यधिकरणं पूर्णम् । तत्र सूत्रम् १ भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् १३ ॥

† अभेदांशे न सर्वज्ञानमिति १ पु. पा. ।

‡ व्या. सू. अ. २ पा. १ सू. २४-३३ ।

**नेत्यादिना** । किंचित्करत्वे यत्किंचिदसत्त्वं क्रियते तदपि स्वरूपं धर्मो वेत्यादि विकल्प्य तद्दूषणानां* संभवादित्यर्थः । असत्त्ववत्सत्त्वे ऽपि अर्थान्तरत्वादिविकल्पा द्रष्टव्याः । अर्थान्तरत्वादपि विकारे फलाभावात्सत्त्वान्तरजन्मनि चानवस्थानाद् विकारे सत्त्वान्तरं न भवति किं तु स एव सन् भवतीत्युक्ते ऽपि सत्स्वभावस्यासत्त्वविरोधेन विकारनित्यत्वापातादिति । ननु कार्यमिथ्यात्वं कारणसत्यत्वं चानुमानासिद्धं श्रुत्या दृष्टान्तीकर्तुमयुक्तं लोकसिद्धस्य दृष्टान्तत्वोक्तेरित्याशङ्क्याह **यत्रेति** । मृदेका शरावादयः ३५० । ११ परस्परं भिन्ना इत्यभ्युपगमे ऽत्यन्तभेद एव स्यात् । अथ मृदात्मना शरावादीनामेकत्वं मृदश्च शरावाद्यात्मना नानात्वमिति मतं तद् विकल्प्य दूषयति **इदं तावदित्यादिना** । अत्यन्ताभेदे ह्यपुनरुक्तशब्दद्वयप्रयोगो भेदाभेदयोः कार्यकारणात्मना व्यवस्था च न स्यादित्याह **तत्रेति** । **न चानेकान्तवाद इति** । भेदपक्षे ऽनेकान्तवादश्च न भवतीत्यर्थः । **न भवेदपीति** । अनेकान्तत्वान्न भवेदपीत्यपरोऽर्थः । सत्यवादिनस्तस्करत्वेनारोपितस्य मोक्षवत्सत्यब्रह्मात्मत्ववेदिनो मोक्ष इति तस्करदृष्टान्तः । अहंममाभिमानयोरेकत्र व्याघातः स्यादिति प्रविभज्य योजयति **शरीरादीनीति** । ननु मिथ्यात्वे श्रवणादीनामविद्यानिवृत्तिसमर्थसाक्षात्कारहेतुत्वं न स्यादत आह **सांव्यवहारिकं त्विति** । असत्यादपि कार्यक्षमपदार्थोत्पत्तिमनन्तरमेव वक्ष्याम इत्यर्थः । यद्यसत्यात्सत्यधीः स्यात् तर्हि धूमाभासादपि वह्निधीः समीचीना स्यादित्युक्तम् इत्याशङ्क्याह **न च भ्रम इति** । **धूममहिषी** धूमो । स च वाष्पः । असत्यादपि सत्यमुत्पद्यत इत्युच्यते न पुनरसत्यात्सत्योत्पादनियम इत्यर्थः । यदि पुनः कुतश्चिदसत्यात्सत्यं जातमिति सर्वस्मादसत्यात्सत्यजन्मापाद्यते तर्हि किंचित्सत्यं कस्यचित्सत्यस्य जनकमिति तत एव सर्वं सत्यं स्यादिति प्रतिबन्दीमाह **न हीति** । चोद्यसाम्यमुक्त्वा परिहारसाम्यमाह **यत इति** । यतो नियमा- ३५५ । ६ दित्यर्थः । ज्या वयोहानावित्यस्य निष्ठायां संप्रसारणे नञ्समासे चाऽजीनमिति रूपम् । अस्माद्ध्यस्तदीर्घभावादपि ज्यानेर्वयोहानेरभावं सत्यमवगच्छति । वक्ता तु ह्रस्वत्वेनाजिनमिति उच्चरिते भ्रमादजीनमिति गृहीतादस्माच्छ-

* विकल्प्यतद्दूषणानामिति न ३ पु० ।

ब्दाद्या वयोहानिप्रतीतिः सा भ्रान्तिरजिनशब्दो हि चर्मवचन इति । अथ यथा आरोपितस्याऽविशेषे ऽपि किं चिद्रूप्यं सत्यबोधकं किं चिदसत्यबोध-

१५५ । १६ कमेवमस्माकमपीत्यर्थः । **पायं पायं** पीत्वा पीत्वा । **तारत्त्वर्वी** व्याघ्रमयीं तनुमास्थायेत्यन्वयः । व्यात्त विवृतं विकटाभ्यां वक्राभ्यां दंष्ट्राभ्यां करालं भयानकम् आननं यस्याः सा तथोक्ता । उतब्धम् उन्नमय्य धृतम् । सम्भ्रमदत्यर्थं भ्रमन्मस्तकावचुम्बि लाङ्गूलं यस्याः सा तथा । ध्वस्ते इतस्ततो विक्षिप्ते लोचने यस्याः सा तथा । अमित्रमभि प्रतियातुं गताम् अभ्यमित्रीणाम् । स्फटिकशैलप्रतिबिम्बितां ह्यमित्रमिति भ्रमादात्मतनुं धावन्तीं सुप्ता व्याघ्रतनुमास्थितः पश्यतीति । यदि स्वप्नदृशोऽवगतिरबाधिता स्यात्तर्ह्येवोपपद्यतइत्यर्थः । भेदाभेदव्यवहारौ भेदाभेदोपपादकाविति वदन् प्रष्टव्यः किं ब्रह्मज्ञानत्प्राचीनौ तदुपपादकौ पराचीनौ वेति । नाद्य इत्युक्तं **नानात्वांशेन कर्मकाण्डाश्रय इत्यादिना** । तत्त्वज्ञानात्प्रागभेदव्यवहारस्याप्राप्तत्वान्न स उपन्यस्तः । द्वितीयमिदानीं शङ्कते **यच्चोक्तमिति** । एकत्वज्ञानोत्तरकालम् एकत्वव्यवहारोऽपि नास्ति ततरामनेकत्वव्यवहार इति परिहरति **यदि खल्विति** । **डुलिः** कच्छपी । न तस्याः क्षीरमस्ति स्मृत्या हि सा ऽपत्यानि पोषयति । अवगतिर्वृत्तिव्यक्तं स्वरूपम् । यथा खलु घटध्वंसो घटविरोधिकार्योदय एव नाभावस्तस्य तुच्छत्वेन कार्यत्वायोगादेवमविद्यानिवृत्तिरपि विरोधिविद्याभिव्यक्तिरित्याह **अविद्याविरोधिस्वभावतयेति** । अविद्यानिवृत्तिर्यदि विद्यायाः स्व*रूपं कथं तर्हि विद्याफलमत आह **अविद्यानिवृत्तिश्चेति** । न वयं ज्ञानात्पराचीनव्यवहाराय द्वैतसत्यत्वं कल्पयामः किं तु प्राचीनसिद्ध्यर्थमेवेति शङ्कते **स्यादेतदिति** । **एक-**

३५१ । ७ **त्वनिबन्धना व्यवहारो मा भूत्** । द्वैतसत्यत्वापेक्ष इति शेषः । पूर्वं नानात्वांशेन कर्मकाण्डाश्रय इति ग्रन्थे प्रमाणसिद्धाद्भेदव्यवहाराद्भेदसत्यत्वमाशङ्क्य परिहृतम्† इदानीं सर्वलोकप्रसिद्धेर्भेदसत्यत्वमाशङ्क्य देहात्मभाववद् मिथ्यात्वे ऽपि तदुपपत्तिमाहेति भेदः‡ ।

---

* स्वशब्दो नास्ति २-३ पु । † निरस्तमिति २ पु· पा ।

‡ एतदग्रे-स्यादेतत् । न वयमनेकत्वव्यवहारसिद्ध्यर्थमनेकत्वस्य तात्त्विकत्वं कल्पयाम किं तु योगमेवास्य तात्त्विकमिति चोदयति ननु मृदादीति । परिहरति इति ग्रन्थो ऽधिकः २ पु ।

कार्यं कारणादभिन्नं तद्भावउपलब्धेरित्याद्यनुमितौ सूत्रार्थे दोषं दृष्ट्वा व्याख्याति **कारणस्य भाव** इति । भाव इत्यस्य व्याख्यानं **सत्ता चेति** । ननु कारणस्य भाव एव सूत्रे प्रतीयते कार्यस्योपलब्धिरेव तत्कथमुभयत्रेतरेतरविशिष्टये हेतुत्वमत आह **एतदिति** । षष्ठ्यपदं भावपरम् भावो ह्युपलब्धिविषय इति तद्गुडन्यायेन विषयविषयिपरम् । एवं विषयिपदमुपलब्धिपदमप्युभयपरमित्यर्थः । **उपादेयं** कार्यम् । सविशेषणहेतौ फलमाह **तथा चेति** । उपलब्ध्यानुपलब्ध्योरिति हेतूकारे प्रभासाक्षात्कारे साक्षात्कृतेन चाक्षुषेण व्यभिचारः स्यात् । न हि घटादेः प्रभायाश्चाऽभेदस्तन्निवृत्त्यर्थं भावे भावादिति विशेषणम् । न हि प्रभाया भाव एव घटो भवतीत्यर्थः । यदा तद्भावानुरक्तधीविषयत्वं हेत्वर्थस्तदाऽपि भाति घट इति प्रभानुरक्तधीगम्य ऽनेकान्तस्तादिदमुक्तं **प्रभारूपानुविद्धेति** । यदि भावे भावादिति हेतुस्तर्हि वह्निभावे भवति विशिष्टधूमे ऽनेकान्तः स्यात् । उपलब्ध्यानुपलब्ध्योरिति विशेषणे तु न भवेद्धूमस्य यन्त्रानुपलब्धावनुपलब्धिरिति नियमाभावादित्याह **नापीति** । तद्भावानुरक्ता हि बुद्धिः कार्यकारणयोरनन्यत्वे हेतुं वयं वदाम इति भाष्यम् । अथ कारणस्वभावानुविद्धा कार्यबुद्धिर्हेतुत्वेनोक्तेति न भ्रमितव्यम् । तथापि व्यभिचारस्योक्तत्वात्किं तु सूत्रगतोपलब्धिं बुद्धिं कार्यकारणोभयविषयां तयोः कार्यकारणयोर्भावेन तदनयोपरक्तां विशेषितां हेतुं वयं वदाम इति भाष्यार्थ इत्याह **तदनेनेति** । हेतुविशेषणमुक्तं न हेत्वन्तरपरत्वेन व्याख्यानमित्यर्थः । पटस्य तन्तुव्यतिरेकेणाऽनुपलम्भः समवायस्य भेदनिरोधायकत्वादन्यथासिद्ध इत्याशङ्क्याह **न चेति** । सम्बन्धस्य भिन्नाश्रितत्वाद्भेदसिद्धौ समवायः समवायाच्च व्यतिरेकानुपलब्धौ समाहितायां भेदसिद्धिरित्यन्योन्याश्रय इत्यर्थः । पटस्तन्तुभ्यो भिद्यते तदुपलम्भेऽपि कुविन्दव्यापारात्प्रागनुपलब्धत्वात् कुम्भवदित्यनुमानाद्भेदसिद्धेर्नेतरेतराश्रयमित्याशङ्क्याह **न च भेद इति** । अभेदवादिनस्तन्तूपलम्भे तदभिन्नपटोपलम्भाद्धेत्वसिद्धिरित्यर्थः । कारणसत्त्वे तत्त्वादि सत्त्वं स्यादित्याशङ्क्याह **अनयेति** ।

३५९ । १२

,, । १६

**उपपत्तिश्चात्र भवतीति** । आहेति शेषः । उपपत्तिमेव दर्शयति **न हीति** । यथा मृदि घटो मृदात्मनाऽस्ति तथा सिकतायां सदात्मना

३६० । २१

न तैलमस्ति तदुपादानोपादेयत्वाभावकृतमित्यर्थः । ननु मृदेव घटो-
३६१ । २ त्पत्तेः प्रागस्ति कथं तदात्मना घटस्य सत्ता ऽत आह **प्रत्युत्पन्नो हीति ।**
उत्पन्नस्य घटस्य मृदात्मत्वदर्शनान्मृदि सत्यां घटसत्त्वं युक्तमित्यर्थः ।
इत्थं तर्किते कार्यकारणाऽभेदे प्रयुज्यते घटत्वं मृन्निष्ठं घटनिष्ठत्वात्स-
त्त्ववदिति । एवं जगद्ब्रह्मणोरभेदे ऽपि शब्दो ब्रह्मवृत्तिः आकाशवृत्ति-
त्वात्सत्त्ववदिति । कार्यस्य कालत्रये सत्यत्वं भाष्योक्तमयुक्तं तथा सति
कार्यत्वव्याघातादित्याशङ्क्यानिर्वाच्यरूपस्य कादाचित्कत्वे ऽपि कार्यस्य तत्त्व-
मधिष्ठानं तच्च नित्यमिति युक्तितः प्रतिपादयति **यथाहि घट इति ।**
कार्यस्य सत्त्वं स्वरूपं धर्मो वा । आद्ये तस्य कदा चिदसत्त्वं न स्यात् । धर्म-
त्वे च सत्त्वाऽसत्त्वयोर्धर्मयोः कार्यस्य धर्मिणो ऽन्वयात् कादाचित्कत्वव्या-
हतिरित्याद्युपपादित**मधस्तात् ।** दृष्टनष्टस्वरूपत्वादिति भाष्यव्याख्याना-
वसर इत्यर्थः । कार्यस्य त्रिषु कालेषु सत्त्वे कारणस्यापि तथात्वाद् द्वे सत्त्वे
,, । ९ स्यातां तथा चाभेदाऽसिद्धिरित्युक्ताभिप्रायानभिज्ञः शङ्कते **सत्त्वं चेदि-
ति ।** त्रिष्वपि काले कार्यस्य सत्त्वं चेदित्यर्थः । कार्यकारणयोः स्वरूपसत्त्वं
चैकमित्यर्थः । यदि कार्यकारणयोरेकसत्त्वादभेदादभिन्नत्वं तर्हि तस्यापि
द्वाभ्यामभेदाद्भेदापत्तिरित्याशङ्क्याह **न च ताभ्यामिति ।** न हि वयं
सत्त्वेन कार्यकारणयोः साक्षादभेदं ब्रूमः किं तु तत्र तयोरारोपितत्वेन
तद्व्यतिरेकेणाभावम् । यदि मन्यते सत्त्वमेव कार्यकारणयोरारोपितम-
स्त्विति तत्राह **तथा सति हीति ।** स्वकृतस्यैव प्रसञ्जनमयुक्तं दर्श-
यितुं तामेव पक्षविभागपूर्वकमाह **तत्रेति ।** भेदः* कार्यकारणलक्षणः सत्त्व-
मभेदः । अस्मादयं भिन्न इत्यत्र पञ्चम्युल्लिखिताऽवधेर्ग्रहो धर्मिणः सका-
शादगृहीतभेदस्य न संभवति । भेदग्रहश्च नागृहीते प्रतियोगित्वे उपप-
द्यते । धर्मिणोऽपि स्वापेक्षया तत्प्रसङ्गानतश्चान्योन्याश्रयत्वस्तभेद एवारो-
,, । १६ पितो नाऽभेद इत्याह **वयं त्विति ।**

यस्त्वयमन्योन्याश्रयस्य केन चिदुद्धारः कृतः प्रतियोगित्वेनाप्रती-
ताधिकरणत्वप्रतीतिरधिकरणत्वेनाप्रतियोगित्वप्रतीतिश्च भेदग्रहणकारणं
न भेदेन गृहीतत्वम् । एकं हि अन्योन्याभावाख्याभेदं प्रति स्तम्भकुम्भ-

* तत्र भेद इति २-३ पु० पा० ।

योरधिकरणत्वं प्रतियोगित्वं चास्ति । अतः स्वस्मादपि स्वस्य भेदग्रह-वारणाय प्रतियोगित्वेनेत्यादिविशेषणम् । स्तम्भाद्भिन्नः कुम्भ इत्यत्र हि स्तम्भः प्रतियोगित्वेनैव प्रतीयते नाधिकरणत्वेन । कुम्भश्चाधिकरणत्वेन न प्रतियोगितया । कुम्भाद्भिन्नः स्तम्भ इति प्रतीत्यन्तरे तु तमेव भेदं प्रति कुम्भः प्रतियोगितया प्रतिभाति स्तम्भश्च धर्मितया । ततश्चोक्ताव-धवस्तुप्रतीतिर्भेदग्रहे हेतुरिति क्वेतरेतराश्रयमिति । सो ऽसाधुः । भेदाधि-करणत्वेन भेदप्रतियोगित्वेन च प्रतीतेरपेक्षायामन्योन्याश्रयादनिस्तारादस्य कस्य चिदधिकरणत्वेन प्रतियोगित्वेन च प्रतीत्यपेक्षायां सताधिकरणत्वेन पुरोदेशादन्यदेशगतसंसर्गाभावं प्रति प्रतियोगित्वेन च स्फुरतः शुक्तीदमंशस्य रजताद्भेदग्रहप्रसङ्गेन भ्रमानुदयप्रसङ्गाद्वस्तुवृत्तेन भेदाधिकरणस्य तत्प्रतियोगि-नश्च स्वरूपेण प्रतीत्यपेक्षा ऽप्यत एवापास्ता । स्वरूपेण गृहीतयोः शुक्तीद-मंशरजतयोर्वस्तुवृत्तेन तथाभूतयोर्भेदग्रहप्रसङ्गात् । एवं स्वरूपं भेद इति चापि एवापास्तम् । असाधारणं स्वरूपं भेद इत्यपि न । असाधारणत्वस्य भेद-ग्रहाधीनग्रहत्वेन भेदान्तरापेक्षाया स्वरूपभेदाभ्युपगमभङ्गादिति दिक् ।

भेदेनोपजीव्यत्वाच्चाभेदो नाध्यस्त इत्याह एकैकेति । वीप्सया ३६१ । १८ भ्रान्तभेदानुवादः । अत एवैकाभाव इत्युक्तम् । व्याकृतनामरूपत्वादिति भाष्ये व्यक्ताव्यक्त*स्वीकृतेः साङ्ख्यवादापात इत्याशङ्क्याह व्याकृतत्वेनेति ।

नान्या ऽसतीति भाष्ये असतीति च्छेदः । कार्यरूपेण च सत्त्वं शक्त-रणाद्यते तथा सति हि कार्यस्यासत्त्वप्रतिज्ञा मिथ्येति मत्वात आह नाप्यसतीति । भावाच्चेति द्वितीयपादव्याख्यायां कारणातिरेकेण कार्या-नुपलम्भस्योक्तत्वात्पुनरुक्तिमाशङ्क्याह यद्यपीति । स्वपरनिर्वाहकत्वात्स-मवायः संबन्धान्तरानपेक्षश्चेत्संयोगो ऽपि नापेक्षेतेति प्रतिबन्दी सा संयो-गस्य कार्यत्वरूपविशेषादयुक्तेत्याशङ्क्य नित्ये आत्माकाशसंयोगे तस्यासि-द्धिमाह अजेति । अजसंयोगमनिच्छन्तं प्रति सर्वत्राऽसिद्धिमाह अपि चेति । अस्तु संयोगनित्यत्वाभावाय समवायो ऽप्यनित्यस्तथापि नानवस्था समवायस्य समवायिकारणानभ्युपगमेन निमित्तकारणमात्रादुत्पत्तेः समवा-यान्तराप्रसङ्गादित्याशङ्क्याह तथा सतीति । ततः संयोगस्य समवायिका ३६३ । ७

* व्यक्ताव्यक्तेति १ पु· पा· । ‡ इत्यादीति ३ पु· पा· ।

णमिच्छता समवायस्यापि तदेष्टव्यमित्यनवस्था तदवस्थैवेत्यर्थः । नानात्वेन सहैक आश्रयो यस्य स संबन्धस्तथोक्तः । उत्पत्तिकर्तुः कार्यस्य प्रागुत्पत्तेर्नासत्त्वमित्युक्ते सत्त्वोत्पत्तेर्न कार्यं कर्तृ किं तु कारणमिति शङ्कते **यच्चोक्तमिति** । यद्यप्युत्पद्यते घट इति कार्यस्य कर्तृत्वं भाति तथापि गौण्या वृत्त्या कारणस्य तत्र च सिद्धेषु कपालेषु जायतइति पूर्वापरकालव्यासक्तप्रयोगानुपपत्तिः कार्योत्पादनाया व्यासक्तत्वादित्यर्थः । कपालकर्तृका घटविषयोत्पादना नोत्पत्तिः सा तु घटकर्तृकेति परिहरति **उत्पादना हीत्यादिना** । यद्युत्पत्तिरुत्पादनैव तर्हि उत्पादनायामिवोत्पत्तावपि सकर्मकत्वाद् घटस्य कर्मत्वं व्यपदिश्येत न चैवमस्तीत्यर्थः । भृत्यो हि घटं करोति स्वामी कारयति तत्र यथा करोतिकारयत्योराश्रयभेद एवमत्रापीत्यर्थः । धात्वर्थव्यापारः कर्तेति कर्तृलक्षणयोगाच्च घट एवोत्पत्तिकर्तेत्याह **एवं चेति** । स्वकारणे कार्यस्य समवायो जन्म स्वस्मिन्नसति कार्ये सत्तासमवायो वेत्यर्थः । **भिन्नमेवेति** । सामानाधिकरण्येन हि भिन्नमिवाभिन्नमिव चकास्तीति । **अनयैवेति** । इतरथा हि सांख्यवादः स्यादिति । भाष्यगतमूलकारणशब्देन ब्रह्मणोऽन्यः कश्चिन्मायाप्रतिबिम्बितो नाभिधीयते । तथा सति तस्य परिच्छिन्नत्वादधिकरणोपक्रमोक्तस्य कारणविज्ञानात्सर्वविज्ञानस्यासंभवप्रसङ्गात्किं तु सर्वाधिष्ठानमित्याह **मूलकारणमिति** ।

३६४ । ९

स्वशक्त्या नटवद् ब्रह्म कारणं शङ्करोऽब्रवीत् ।
जीवभ्रान्तिनिमित्तं तद् बभाषे भामतीपतिः* ॥
अज्ञातं नटवद् ब्रह्म कारणं शंकरोऽब्रवीत् ।
जीवाज्ञातं जगद्बीजं जगौ वाचस्पतिस्तथा ॥

कार्यमुपादानाद् भिन्नं तदुपलब्धावपि अनुपलब्धत्वात् ततोऽधिकपरिमाणत्वाच्च संमतवदित्यनुमानयोर्व्यभिचारार्थं **पटवच्चेति** सूत्रम्† ।

३६६ । २ तस्यामेव प्रतिज्ञायां भिन्नकार्यकरत्वस्य व्यभिचारार्थं **यथा च प्राणादि** इति‡ ॥

* अयं श्लोकः ३-३ पु नास्ति । † व्या. सू. अ. २ पा. १ सू. १९ ।

‡ अत्र षष्ठम आरम्भणाधिकरणं पूर्णम् । तत्र सूत्राणि ७-तदनन्यत्वमारम्भणशब्दादिभ्यः १४ भावे चोपलब्धेः १५ सत्त्वाच्चावरस्य १६ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् १७ युक्तेः शब्दान्तराच्च १८ पटवच्च १९ यथा च प्राणादि २० ॥

**इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥** ३६६ । ४

जीवाभिन्नं ब्रह्म जगदुपादानं यदन्यसमन्वयो यदि तादृग् ब्रह्म जगज्जनयेत् तर्हि स्वानिष्टं न सृजेदिति न्यायेन विरुध्यते न वेति संदेहे पूर्ववत् कार्यकारणयोरनन्यत्ववद् घटाकाशकल्पजीवानामपि महाकाशोपमब्रह्मात्मैक्य*मुक्तं तस्य हिताकरणादानुपपत्तिमिर॰ तेषात्महानि: । ननु सो ऽन्वेष्टव्य इत्यादिभेदनिर्देशात् कथं पूर्वपक्षस्तत्राह यद्यपीति । यदि भेदाभेदावेकत्र विरुद्धौ तर्ह्यभेद एव भेदेन बाध्यतामत आह न च भेद इति । इत्युक्तम् अनन्तराधिकरणइत्यर्थः । ननु स्वाभाविकं ब्रह्मणैकत्वं जीवा अविद्योपहिताः स्वेषां न जानन्तीति हिते ऽप्यहितप्रमादकरणमुपपन्नमत आह तेनेति । महदभिमान इति । पश्यतीत्यन्वयः ‡ यद्यपि परमात्मनो दर्शनक्रियाश्रयत्वमनुपपन्नं तथापि पुरुषः स्वप्रकाश एव‡ तत्तद्विशेषेणोपरक्तस्तं तं यथावस्थितं§ भासयतीति अतः पश्यतीति निर्दिश्यते॥ ।

**उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि¶ ॥ २४ ॥** ३६१ । ९

ब्रह्म नोपादानमसहायत्वात्संमतवदिति न्यायेन समन्वयस्य विरोधसंदेहे पूर्वत्रौपाधिकजीवब्रह्मभेदाद्धिताकरणादिदोषः परिहृत एवं तूपाधितो ऽपि विभक्तमद्वितीयं चादि नास्तीति पूर्वपक्षमाह ब्रह्म खल्वित्यादिना । एकमित्युपादानभेदवारणम् । अद्वितीयमिति सहकारिनिषेधः । एकत्वप्रयुक्तं दूषणमाह न ह्येकरूपादिति । कारणवैजात्ये हि कार्यवैजात्यमित्यर्थः । न केवलं कार्यवैजात्यायोग एकजातीयकार्याणामपि क्रमायोग इत्याह न चाक्रमादिति । समर्थमपि सहकार्यपेक्षं सत् क्रमेण कुर्यादित्याशङ्कामपनयन्नद्वितीयत्वप्रयुक्तामनुपपत्तिमाह अद्वितीयतया चेति** । भाष्य- ११ । १६

* ब्रह्मैक्यमिति १ पु॰ पा॰ । † स्वेषामिति नास्ति २–३ पु॰ ।

‡ स्वप्रकाश एवेति २–३ पु॰ पा॰ । § यथावस्थितमिति २॰ पु॰ पा॰ ।

|| अत्र सप्तमम् इतरव्यपदेशाधिकरणं पूर्णम् । तत्र सूत्राणि ३–इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः २१ अधिकं तु भेदनिर्देशात् २२ अश्मादिवच्च तदनुपपत्तिः २३ ।

¶ क्षीरवद्धीति पाठान्तरम् । ** द्वितीयतया चेति मु॰ भा॰ पु॰ अपपाठः ।

३६७ । १८ स्वकारकसाधनपदयोः अपौनरुक्त्यमाह **एकैकमिति** । समर्थानां भावः सामर्थ्यम् । कथं तस्य साधनशब्दाभिधेयत्वमत आह **ततो हीति*** । **साधयत्येवेति** । साधनमित्यर्थः । श्रुतौ करणं निष्पादनम् । अत्यन्तव्यतिरिक्तत्वं स्वधर्मत्वेनानन्तर्भूतत्वम् । एकस्मिन्काले उषित्वा तं परित्यज्य कालान्तरेऽपि वासः परिवासः पर्युषितमिति दर्शनात् । आन्तरत्वं नाम स्वधर्मत्वम् । मायिनं मायाविषयम् । अज्ञातत्वस्य वस्तुधर्मत्वात् तद्द्वारेण मायाख्यमज्ञानमपि धर्म इत्यान्तरत्वम् । ननु मायाया अव्यक्तत्वात् कथमक्रमात्कारणात् कार्यक्रमस्तत्राह **कार्यक्रमेणेति** । तस्या मायायाः परिपाकस्तत्तत्कार्यसर्गं प्रति पौष्कल्यम् । तस्य क्रमोऽपि कार्यक्रमान्यथानुपपत्त्या कल्प्य इत्यर्थः । पूर्वमविद्यासाचिव्यादसहायत्वमसिद्धमित्युक्तम् इदानीमङ्गीकृत्यापि तदनैकान्तिकत्वमाह **एकस्मादपीति** । शरे उत्पन्नं हि कर्म पूर्वाकाशप्रदेशविभागमुत्तरप्रदेशसंयोगं शरे च वेगाख्यसंस्कारं जनयतीत्यनैकान्तिकम् । असहायत्वं नानाकार्यानुत्पादमित्यर्थः । असहायस्योपादानत्वे क्षीरवदुपपाद्यासहायस्याधिष्ठातृत्वसमर्थक*दृष्टमवतारयति **यदि त्विति**† ॥

३६९ । १ **कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥**

सावयवस्यैव नानाकार्योपादानतेति न्यायेन समन्वयस्य विरोधसंदेहे पूर्वाधिकरणोक्तक्षीरदृष्टान्तात् परिणामित्वभ्रमे तन्निरासात् संगतिमाह **क्षीरेति** । तस्मादविकृतं ब्रह्मेति भाष्यं तदस्तीति तत्त्वत इति च पदाध्याहारेण व्याचष्टे **तस्मादिति** । इतरथा हि मायामयविकारनिषेधे जगत्सर्गो न स्यादस्तीत्यनुक्तौ च साक्षाद्गत्वं स्यादिति निरवयवेऽपि ब्रह्मणि विचित्रशक्तिवशेनाऽकृत्स्नप्रसक्तेरुक्तत्वाद्गोद्यानुपपत्तिमाशङ्क्य शक्तीनामवास्तवत्वकथनार्थत्वेन परिहरति **अविद्येति** । अवस्तुत्वात्समुदायो न परिणमते समुदायिष्वपि यदि सत्त्वमात्र परिणमते न रजस्तमसी ततो

* ततो हीति १ पु पा. ।

† अत्र अष्टमम् उपसंहारदर्शनाधिकरणं पूर्णम् । तत्र सूत्रे २—उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि २४ देवादिवदपि लोके २५ ॥

मूलोच्छेदो न स्यान्न चैतदस्ति इत्याह **यद्यपि समुदाय इति**। द्व्यणु-
कमारब्धुमणुना संयुज्यमानोऽणुरुपर्यधः पार्श्वतश्चतसृष्वपि दिक्षु कदा-
चित् कश्चित्संयुज्यते ते च सर्वे तेन समानदेशा इति प्रथिमानुपपत्तेर्द्व्यणु-
कपिण्डः परमाणुमात्रः प्रसज्येतेत्यर्थः। अव्याप्यवृत्तौ संयोगस्य तावन्नैकत्र
भावाऽभावावित्युक्तम्। अथ प्रदेशभेदेन भावाऽभावौ तत्राह **अव्यापने
चेति**। **कार्यकारणभाव** आरम्भः*।

## सर्वोपेता च तद्दर्शनात् ॥ ३० ॥

३७१। ६

मायाशक्तिमद्ब्रह्मणः जगत्सर्गं घटतः समन्वयस्याशरीरस्य न
मायेति न्यायेन विरोधसंदेहे संगतिमाह **विचित्रेति**। अन्तर्याम्यधि-
करणे त्वविद्योपार्जितत्वसंबन्धे जगद्ब्रह्मणोः सिद्धे शरीररहितस्यापि निय-
न्तृत्वसंभव उक्तः इह त्वशरीरस्याविद्याशक्तिरस्तीति भेदः। तदुक्तमि-
त्येतद्देवादिवदपीति[1] सूत्रोक्तिपरत्वेन व्याचष्टे **कुलालादिभ्य इति**। आ-
त्मनि चैवम्[2] इति सूत्रोक्तिपरत्वेनापि व्याचष्टे **यथा त्विति**। शक्तिमन्तो
देवादयो यद्यपि शरीरिणः तथापि बाह्यसाधनाऽनपेक्षाः। यदि तु तत्र
दृष्टं शरीरित्वं शक्तिमत्त्वेन ब्रह्मण्यापाद्यते तर्हि कर्तृत्वेन कुलालादिषु दृष्टं
बाह्यसाधनापेक्षत्वं देवादिष्वप्यापाद्येतेति प्रतिबन्द्या प्रमेयसंभावनोक्ता।
**अप्रमाणम्** इति प्रमाणमुक्तम्¶ ॥

## न प्रयोजनवत्त्वात् ॥ ३२ ॥

,, । १६

परितृप्तब्रह्मणो जगत्सर्गवादिसमन्वयस्य ब्रह्म न विना प्रयोजनेन
सृजति अभ्रान्तचेतनत्वात्सम्मतवदिति न्यायेन बाधसंदेहे पूर्वेण सर्व-
शक्ति ब्रह्मेत्युक्तं तर्हि शक्तस्यापि प्रयोजनाभिसंध्यभावादकर्तृत्वमिति पूर्व-

* अत्र नवमं कृत्स्नप्रसक्त्यधिकरणं पूर्णम्। तत्र सूत्राणि ४ कृत्स्नप्रसक्तिर्निरवयवत्व-
शब्दकोपो वा २६ श्रुतेस्तु शब्दमूलत्वात् २७ आत्मनि चैवं विचित्राश्च हि २८
स्वपक्षदोषाच्च २९ ॥

१ व्या॰ सू॰ अ॰ १ पा॰ ३ सू॰ ५८। २ व्या॰ सू॰ अ॰ २ पा॰ १ सू॰ २५।
३ व्या॰ सू॰ अ॰ २ पा॰ १ सू॰ २८। ४ यथा वैतानि २–३ प॰ पा॰।

¶ अत्र दशमं सर्वोपेताधिकरणं पूर्णम्। तत्र सूत्रे २—सर्वोपेता च तद्दर्शनात् ३०
विकरणत्वान्नेति चेत्तदुक्तम् ३१ ॥

